शास्त्रविशारद-जैनाचार्य-श्रीमद्-विजयधर्मसूरिभ्यो नमः ।

पण्डितश्रीमोहनविजयजीप्रणीतमानतुङ्ग-मानवती-रासानुसारेण कच्छ-वागडदेशोद्धारक-मुनिराजश्रीजीतविजयजी-पट्टधर-सुविहितमुनिराजश्रीहीरविजयजीशिष्यरत्न पंन्यास-श्रीतिलकविजयगणिवरविरचितम् ॥



# ॥ श्रीमानतुङ्ग-मानवतीचरित्रम् ॥



संशोधकः—कच्छ-वागडदेशोद्धारक मुनिराज श्रीजीतविजयजी-पट्टधर सुविहित मुनिराजश्री हीरविजयजी-पट्टधर मुनिराज श्रीबुद्धिविजयः

प्रकाशक-

मेसर्स ए. एम्. एन्ड कम्पनी. पालीताणा, काठियावाड.

मूल्यम्-रू. [illegible]-[illegible]-०

मुद्रक :—शाह गुलाबचंद लल्लुभाई, श्री महोदय प्रिन्टींग प्रेस, दाणापीठ—भावनगर.

॥ ॐ अर्हम् ॥

# किञ्चित्प्रास्ताविकम् ।

**अयि सुरभारतीप्रणयिनो मान्या विद्वांसः !**

दुःखवारिपरिपूर्णे निःसारेऽस्मिन्प्रपञ्चनिलये चक्रवत् परिभ्रमतां जन्तूनां शाश्वतसमालम्बनदण्डभूतो मोक्षपथप्रदर्शको जैनधर्म इति नेदं श्रुतिपथवञ्चितं तत्रभवतां श्रीमताम् ।

उपायाः शिक्षमाणानां, बालानामुपलालनाः । असत्ये वर्त्मनि स्थित्वा, ततः सत्यं समीहते ।

इति हयुक्त्यनुसारेण पण्डितप्रकाण्डः श्रीमान्मोहनविजयोऽसत्पथप्रवर्तनद्वारा सत्पथप्रापकं मानतुङ्ग–मानवत्याख्यं रासनामकं पुस्तकं विरचयामास । तत्प्रतिकृतिरूपं मानतुङ्गमानवतीचरित्रं सुकोमलसंस्कृतगिरा भव्यजनोपकृतये सुकुमारमतीनामल्पायासेन जैनधर्मतत्त्वसुविज्ञानाय च पंन्यासपदमधितिष्ठता श्रीमता परमकारुणिकेन गुरुकल्पश्रीतिलकविजयगणिवरेण निरमायीति । ॐ अर्हं शान्तिः ३ ।

विदुषां वशंवदः

निखिलसद्गुणगणालंकृत मुनिराज श्रीबुद्धिविजयजीमहाराज पट्टधरः

शान्तिविजयः

पंन्यासश्रीतिलकविजयगणिविरचितम् ।

# मृषावादपरिहारे श्रीमानतुङ्ग—मानवतीचरित्रम् ।

## प्रथमः सर्गः ॥

भूर्भुवःस्वस्त्रयीख्यात ! निर्गुण ! गुणसागर ! । स्वीकुरु मे नमस्कारा—ननादिपरमेश्वर ! ॥ १ ॥
द्विधाधर्मोपदेष्टारं, देवेन्द्रनतपत्कजम् । वन्देऽहं श्रीमहावीरं, वीरं कर्मारिसूदने ॥ २ ॥
नमामि भारतीं देवीं, सर्वतत्त्वार्थबोधिनीम् । शनीन्शुक्रीकरोति या, पादपङ्कजसेवनात् ॥ ३ ॥
अद्भुतदीपको गुरुः, करोति ज्ञानतेजसा । अज्ञानतमसां नाशं, सेवे तं नित्यशो मुदा ॥ ४ ॥
सर्वदेवान्नमस्कृत्य, मृषावादनिदर्शनम् । मानतुङ्ग—मानवतीचरित्रं, क्रियते देववाङ्मयम् ॥ ५ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

लिङ्गिनां परमाधारो, वेश्यानां परमो निधिः । वणिजां परमा नीवी, मृषावाद ! नमोऽस्तु ते ॥ १ ॥

पारदारिकचौराणा-मास्ति काचित् प्रतिक्रिया । असत्यवादिनः पुंसः, प्रतीकारो न विद्यते ॥ २ ॥
असत्यमप्रत्ययमूलकारणं, कुवासनासद्म समृद्धिवारणम् ।
विपन्निदानं परवञ्चनोर्जितं, कृतापराधं कृतिभिर्विवर्जितम् ॥ ३ ॥

साधुश्रावकयोर्धर्मो, द्विविधः प्रतिपादितः । पञ्चद्वादशमुख्यानि, व्रतानि विहितानि च ॥ ६ ॥ मृषावादव्रतं तेषु, द्वितीयं परिकीर्तितम् । आराधितेन तेनैव, जायते शिवसङ्गमः ॥ ७ ॥ व्रतेऽत्रादर्शरूपेण, मानतुङ्गस्य वल्लभा । जाता मानवती नाम्न्यु-ज्जयिनीवरमानिनी ॥ ८ ॥ अवाग्भरतखण्डस्य, नाम्ना देशोऽस्ति मालवः । अन्यदेशाहिमध्ये यो, मुख्यो मणिधरः स्मृतः ॥ ९ ॥ तत्रोज्जयिन्यपूर्वा पू-रिन्द्रपूरिव शोभना । यल्लज्जया समुद्रान्त-र्निमग्नं लंकया पुरा ॥ १० ॥ स्फटिकरत्न-निर्माणं, गृहाणां यत्र विद्यते । येषामुच्चतमप्रस्थैः, श्लिष्टं गगनमण्डलम् ॥ ११ ॥ तां परितो महावप्रो, दृश्यते त्वष्टृनिर्मितः। सीमन्तिनीं यथा पट्टो[1], वृत[2] आह्लाददायकः ॥ १२ ॥ प्रत्यापणं बहुक्रय्यं, मार्गे पङ्कश्च कौङ्कुमः । तुन्दिला व्यवहारिणः, प्रफुल्लानन-पङ्कजाः ॥१३॥ मानोत्तुङ्गा विलासिन्य-श्चन्द्रमुख्यश्चलन्ति हि । यासां नूपुरझाङ्कारैः, कृष्टं दिविपदां मनः ॥ १४ ॥ हयरथगजानीक-युक्तराज्याश्रमे मुनिः । रूपनिर्जितकामश्च, राजकार्यविचक्षणः ॥ १५ ॥ मानतुङ्गनृपस्तत्र, चारु राज्यम-पालयत् । भूमी राजन्वती येन, यथेन्द्रेणामरावनिः ॥ युग्मम् ॥ १६ ॥ वाङ्मनोदेहशुद्धोऽसौ, भीतित्रासितशात्रवः । सन्नृणा-

१ पट्टो—वस्त्रविशेषः । २ वृतो—वर्तुलः ।

माश्रयायाभूद्, दुर्जनानां भयाय च ॥ १७ ॥
उक्तञ्च सूक्तमुक्तावल्यां—

दुष्टस्य दण्डः सुजनस्य पूजा, न्यायेन कोशस्य च संप्रवृद्धिः ।
अपक्षपातो रिपुराष्ट्ररक्षा, पञ्चैव यज्ञाः कथिता नृपाणाम् ॥ ४ ॥

दुष्टानां दमनं नयानुगमनं स्वीयप्रजापालनं,
नित्यं देवमहर्षिपादनमनं षड्दर्शनीमाननम् ।
औचित्याचरणं परोपकरणं त्यागं सुभोगं श्रियां,
कुर्वाणो नृपतिः श्रिया निजपतिः सत्येव नो मुच्यते ॥ ५ ॥

यस्तेजस्वी यशस्वी शरणगतजनत्राणकर्मप्रवीणः,
शास्ता शश्वत्खलानां क्षतरिपुनिवहः पालकः स्वप्रजानाम् ।
दाता भोक्ता विवेकी नयपथपथिकः सुप्रतिज्ञः कृतज्ञः,
प्राज्यं राज्यं स राजा प्रथयति पृथिवीमण्डलेऽखण्डिताज्ञः ॥ ६ ॥

षोडशविषयं भुञ्जन्, तदासीदेकभूपतिः । चार्वङ्ग्यास्तस्य बालाया-श्चक्रेऽसौ पाणिपीडनम् ॥ १८ ॥ चन्द्रः सर्वकला-युक्तो, यथा स्यात्पूर्णिमादिने । अयम्भूपस्तया देव्या, सर्वदा पूर्णचन्द्रमाः ॥ १९ ॥ महामात्यः सुबुद्धिः स, प्रौढधीर्नीति-विद्वरः । सार्थकीकृतसंज्ञश्च, प्रज्ञानिर्जितगीष्पतिः ॥ २० ॥ अन्यैश्चानेकसन्मित्रैः, सहितो धर्मतत्परः । पालयति प्रजां राजा, कुनीतितः पराङ्मुखः ॥ २१ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा, न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ७ ॥

दुःखं वरं चैव वरं च भैक्ष्यं, वरं च मौर्ख्यं हि वरं रुजोऽपि ।
मृत्युः प्रवासोऽपि वरं नराणाम्, परं सदाचारविलङ्घनं नो ॥ ८ ॥

सदाचारस्य धीरस्य, धीमतो दीर्घदर्शिनः । न्यायप्रवृत्तिशीलस्य, सन्तु वा यान्तु वा श्रियः ॥ ९ ॥

मूर्धदत्तकरद्वन्द्व-सेवकाकीर्णभूतले । नाट्यगानप्रकुर्वाण-नटगायकसंकुले ॥ २२ ॥ क्रियमाणयशोगान-नादपूरितदिङ्-मुखे । स्थितः सदोगृहे राजा, सभासद्युक्त एकदा ॥ युग्मम् ॥ २३ ॥ प्राचीवधूतिरस्कार-क्रुद्धस्तरण्यरँस्ततः । रक्तीभूय

प्रतीचीं स, सादरं संश्रितो यदा ॥ २४ ॥ झांकारैर्झल्लरीणां च, शङ्खैश्च मेघगर्जनैः । हयगजररथागत्या, प्रतिगेहं च शिञ्जितम् ॥ २५ ॥ पद्मिन्यश्चञ्चला जाता, अलङ्कारप्रसाधने । स्वैरिण्यस्तस्कराश्चाऽपि, गुप्तमार्गं व्यलोकयन् ॥ २६ ॥ दीपज्योतिः प्रतिस्थानं, जातं शोभाविवर्धने । पूरम्भकानि निर्माय, पश्यतीव नृपाननम् ॥ २७ ॥ एकयामो गतो रात्र्याः, सभां तदा विसृज्य सः । बोद्धुं नगरवृत्तान्तं, संकल्पं मनसि व्यधात् ॥ २८ ॥ मयि प्रजाजनप्रेम, कीदृगिति दिदृक्षया । कुतूहलसमाकीर्ण, उत्थितश्च ततो नृपः ॥ २९ ॥ फुल्लाननोऽसिसाहाय्यो, नीलवासाः प्रशान्तधीः । अभवन्मौनधारी च, व्रतीव वृत्तलब्धये ॥ ३० ॥ यशोगानानि शृण्वन् स, व्रजन्नेकः पथि प्रधीः । अगण्यहट्टानुल्लङ्घ्य, प्रतोलीषु विवेश वै ॥ ३१ ॥ पौरा वदन्ति राजाऽय-मनुपमगुणाकरः । सत्यतायां हरिश्चन्द्रो, बली भीम इवापरः ॥ ३२ ॥ रामराज्यमिवेयं पू-श्चौरादिभिर्विवर्जिता । वायवोऽपि तृणादानं, नेच्छन्ति प्राणिनः किमु ॥ ३३ ॥ प्रजाभ्यो नाददे दण्डं, स तु देवालये स्थितः । प्राणिनो बन्धनं मुक्त्वा, स्त्रीणां धम्मिल्लके स्थितम् ॥ ३४ ॥ ताडनं घंटिकायाश्च, व्यभिचारस्तु कोपगः । ईतयो देशपारे च, लोका धर्मक्रियारताः ॥ ३५ ॥ गुणपूरितभूपोऽसौ, कलिर्न तं समाश्रितः । विपक्षभावमाश्रित्य, विपक्षहृदि संस्थितः ॥ ३६ ॥ चिरजीवी नृपो भूया-दुष्णवायुर्न जायताम् । लवणाब्धौ निमज्जन्तु, तस्याधिव्याधयः समे ॥ ३७ ॥ प्रभो ! मनोरथास्तस्य, पूर्याः सर्वान् समीहितान् । शत्रुपराभवायाल-मस्माकं जायतां नृपः ॥ ३८ ॥ गुणग्रामेण संयुक्तं, दधतां च यशःपटम् । कृत्रिमैः स्रग्पट्टैः किम्, तादृशां हि महात्मनाम् ? ॥ ३९ ॥ इत्थं प्रजाननेभ्यः स्वं, यशः श्रुत्वा सुविस्तृतम् । प्रसन्नवदनः सोऽभूत्, वारिदेनेव भूरुहः ॥ ४० ॥ धन्या धन्या प्रजा मे हि, यस्याः प्रेम

मयीदृशम् । शुभं वाञ्छति सर्वोऽपि, धन्योऽस्मि भुवि खल्वहम् ॥ ४१ ॥
उक्तञ्च सूक्तमुक्तावल्यां--

लक्ष्मीर्विवेकेन मतिः श्रुतेन, शक्तिः शमेन प्रभुता नयेन ।
श्रद्धा च धर्मेण समं समेत्य, धन्यस्य पुंसः सफलीभवन्ति ॥ १० ॥

गच्छन्नृपतिरग्रँस्त-त्रैकं पश्यति कौतुकम् । कन्याः पञ्च सुमिल्य, क्रीडन्ति हर्षनिर्भराः ॥ ४२ ॥ स्पर्धया रूपमावृद्धं, मिथो गुणा अनेकशः । मोहयन्त्यः सुरान्नृँश्च, सवयसः शुभाशयाः ॥ ४३ ॥ धृतं पीताम्बरं ताभि-रलङ्काराँश्च षोडश । मानवत्यादयस्ता हि, मानवत्यः स्वभावतः ॥ ४४ ॥ कुब्जीभूय महीपः स, कन्याकेलिं ददर्श हि । शिशुसमा हि राजान-स्तथ्यं सुमहतां वचः ॥ ४५ ॥ घुर्घुराबद्धपादास्ताः, स्फुरद्रत्नविभूषिताः । मुक्तपाशा अशोभन्त, शिरःस्थितोरगा यथा ॥ ४६ ॥ पङ्केरुहपाणयस्ता, धावन्ति स्म द्रुतं द्रुतम् । स्रवत्दानोद्धतेभेन्द्रा, यथा त्यक्तस्ववन्धनाः ॥ ४७ ॥ क्षणं पादौ च सम्मेल्य, मिथो गृह्णन्ति हस्तकान् । मदोद्धता हि कुर्वन्ति, भ्रमणं भावतश्चिरम् ॥ ४८ ॥ सुवर्णचूडिकानाञ्च, किरणाः प्रस्फुरन्ति रवे । तदा वृक्षस्थिता दिव्याः, खद्योता लज्जिताः परम् ॥ ४९ ॥ नूपुरनादपूर्वं ता, गानं गायन्ति सुन्दरम् । आकर्ण्य कोकिलाश्चेदं, ह्रिया शान्तिमगुस्तदा ॥ ५० ॥ मिथो ददति तालं च, हास्यं कुर्वन्ति सर्वदा । शीघ्रभ्रमणवशात्तासां, हारा भान्ति प्रदीपवत् ॥ ५१ ॥ राजा विस्मयमापन्ने-क्षमाणश्च कुतूहलम् । विचारयति हृद्येव-मागताः किमु देवताः ? ॥ ५२ ॥

अथवाप्सरसः स्वर्गात्, क्रीडार्थमत्र संस्थिताः । आह्लादयन्ति चित्तं ताः, समेषां पश्यतां नृणाम् ॥ ५३ ॥ नृत्यन्तीस्ता विलोक्यैवं, जिह्रियत्युर्वशीमुखाः । ततोऽधुना न दृश्यन्ते, क्षमास्थप्राणिभिः ननु ॥ ५४ ॥ कृतार्थोऽद्याभवम् तासां, दर्शनेनोपकारिणा । अमृतस्राविगीतेन, मुग्धोऽस्मि नात्र संशयः ॥ ५५ ॥ बालिकानामिदं रूपं, कथं स्रष्टाऽकरोदिति । विचार्य गुप्तमागच्छत्, कुमारीणाञ्च सन्निधिम् ॥ ५६ ॥

उक्तञ्च सूक्तमुक्तावल्याम्—

> यन्मनोरथशतैरगोचरं, यत्स्पृशन्ति न गिरः कवेरपि ।
> स्वप्नवृत्तिरपि यत्र दुर्लभा, लीलयैव विदधाति तद्विधिः ॥ ११ ॥

क्रीडाश्रमपरिश्रान्ता, बालिकाः श्वासनिर्भराः । कटेषु रक्ततायुक्ता, एकत्र स्थितिमादधुः ॥५७॥ धनदत्तस्य कन्या या, नाम्ना मानवती सती । सर्वमध्यस्थितत्वात्सा, भाति देवीव प्रीतिदा ॥५८॥ रोहिणीव स्फुरत्कान्ति, कनीनां पञ्चकं मिथः । चकारान्तर्गतां वार्तां, निर्जिह्महास्यसंयुतम् ॥ ५९ ॥ पश्यन्नृपः श्रृणोति स्म, तद्वार्तां हृदयङ्गमाम् । मुरलीस्वरलुब्धोऽहि–रिव स्तब्धोऽभवत्तदा ॥ ६० ॥ प्रोचुः कन्याश्चतस्रो रे–मानवति ! श्रृणु ह्यदः । मानत्यागं प्रकुर्वाणा, क्रीडनायोद्यता भव ॥ ६१ ॥ विलम्बं मा कृथाः खेले, सज्जा भव जवाद्यतः । निःशेषं खेलयित्वा हि, वयं यामः कृतार्थताम् ॥६२॥ अल्पार्थं बहुकार्यं, न त्यक्तव्यं शान्तिमिच्छता । खेलन्त्यो रजनीमल्पां, स्वेच्छया व्यत्यगाम तत् ॥६३॥ रात्रिः स्वप्नसमा याति, मानं मानिनि ! मुञ्च रे । विश्राम्य श्रमखेदं च, खेलनायोद्यता भव ॥ ६४ ॥ क्रीडारसं न बाल्ये या, निर्विक्ष्यति यथातथम् । पश्चात्किं ज्ञास्यति

प्रौढा, पतिवशंवदा हि सा ॥ ६५ ॥ सखीभिः कथिता सैव–मुवाच मानवत्यपरम् । कदाग्रहं कथं सख्यः ! समाचरन्ति दुःखदम् ॥ ६६ ॥ अनेन क्रीडनेनालमु–ज्जागरणकारिणा । स्यादल्पमेव सुस्वादं, कृपां कुरुत मय्यलम् ॥६७॥ विन्दव एव रङ्गस्य, न च कुण्डान्यनेकशः । अतः कदाग्रहं त्यक्त्वा, गच्छत सत्वरं गृहम् ॥ ६८ ॥ खेलिष्यामो वयं किञ्च, श्वोऽत्र नानाप्रकारतः । निद्रामनुभवामोऽद्य, हरण्यस्तं गता यतः ॥६९॥ निद्रासक्तमनुष्याणा–मन्यथा गीतसुस्वराः। कर्णेजपा भविष्यन्ति, जागरिष्यन्ति वा जनाः ॥७०॥ अतिक्लेशकृते कार्ये, लाभः को नश्च जायते । अतः कल्ये समागत्य, क्रीडिष्यामो निजेच्छया ॥७१॥ सहचर्यश्चतस्त्रस्ता, ऊचुर्मानवतीं प्रति । धत्से सखि ! कथां नो त्व–मस्माकं हृदये कदा ॥७२॥ कालक्रमेण ताता नः, करिष्यन्ति महोत्सवम् । वरैश्च पञ्चभिः साकं, भावि च करपीडनम् ॥ ७३ ॥ अनुलग्नं कृत्वा पतिस्थान–मलङ्कार्यं सहर्षतः । श्वसुरज्येष्ठमुख्यानां, कर्तव्यो विनयः सदा ॥ ७४ ॥ कर्तव्यं गृहकार्यं च, निर्वृतिः स्यात्कदा न हि । अनुकूलं समैः साकं, वर्तनीयं हि सुन्दरि ! ॥ ७५ ॥ बालसखीवियोगश्च, सर्वासां दुःसहस्तदा । पाल्याः कुलवधूधर्माः, पातिव्रत्यं तथापरम् ॥ ७६ ॥ अवगुण्ठनतो गोप्यं, मुखं वचसि मन्दता । दृष्टेर्मोच्यो न भर्ता च, पञ्जरबद्धकीरवत् ॥७७॥ तद्धे सखि ! रमस्वाद्य, मनः प्रसन्नतां नय । स्वीकार्यं सादरं वाक्यं, सहचरीसुभाषितम् ॥ ७८ ॥ गलद्द्रवी कथं जाता, शीघ्रमुत्तिष्ठ मानिनि ! । एवं संमील्य पश्चात्क, रंस्यामहे कदा वयम् ॥ ७९ ॥ स्मरामः सर्वदा वार्णीं, मिष्टां तव प्रिये सखि ! । प्रभुस्तव वियोगो मा, कार्षीत् कदापि दीनपः ॥ ८० ॥ तदा प्रत्युत्तरं प्रादात्, मानवती मदोद्धतम् । पतिवश्या यदि स्यात, युष्माकं जन्म धिक् तदा ॥ ८१ ॥ करग्रहः प्रमाणं स्याद्वशवर्ती पतिर्यदि । अन्यथा दासवद्वृत्तिः, पालनीया भवेत्सदा ॥ ८२ ॥ सुन्दर्यग्रे शूरता ना,

किं मात्रं तस्य पौरुषं ? । वशीभवेद्यथा बद्धो, नाथनया बली वृषः ॥ ८३ ॥ केऽपि नारीचरित्रज्ञा, न सन्ति देवदानवाः । स्रष्टाऽपि तद्विचारे हि, युगानां कोटिमत्यगात् ॥ ८४ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

तावदेव कृतिनामपि स्फुर–त्येष निर्मलविवेकदीपकः ।
यावदत्र न कुरङ्गचक्षुषा, ताड्यते चटुललोचनाञ्चलैः ॥ १२ ॥
सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेन्द्रियाणां,
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते,
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥ १३ ॥
उन्मत्तप्रेमसंरम्भादारभन्ते यदङ्गनाः ।
तत्र प्रत्यूहमाधातुं ब्रह्माऽपि खलु कातरः ॥ १४ ॥
गङ्गाइ वालुअं सायरे जलं हिमवओ अ परिमाणम् ।

श्रुत्वा मानवतीवाणीं, चतस्रश्चलितास्तदा । प्रत्यूचुश्च प्रियां वाणीं, हितांश्च समयोचिताम् ॥८५॥ वक्तव्या मधुरा भाषा, या च हितकारी भवेत् । सन्मान्या च समैर्यास्यात्, न स्यान्निजविमानता ॥ ८६ ॥ नराग्रे सुन्दरीणां च, न प्रमाणं मनागपि । उपानद्रत्नसम्बद्धाऽपि, स्यात्पादस्य रक्षिका ॥८७॥ कालागुरुः सुगन्धाऽपि, निक्षिप्यते हि पावके । तटिनी विषमापि स्यात्सरला सा सागरे सदा ॥ ८८ ॥ कदापि न प्रतार्यः स्यात्पतिः पतिव्रतस्त्रिया । पथा दिष्टेन संचर्यं, पेयं च चरणोदकम् ॥८९॥ स्वामिना यत् समादिष्टं, कर्तव्यं जायया सदा । मिष्टभाषणपूर्वं तं, भोजयित्वा च भोजनम् ॥ ९० ॥ श्रृङ्गारहास्यगीतेन, रंजयित्वा सुसेवया । पतिः प्रसादनीयः स्यात्, सुन्दरीभिश्च सर्वदा ॥ ९१ ॥ प्राणेशे जिह्मवृत्तिः स्यात्पापकर्मप्रवर्धिनी । सरलाभिरतो भाव्यं, पत्नीभिः पतिसङ्गमे ॥९२॥ अश्वलवन्धनं येन, तेनैव कपटः कथम् ? । वैनतेयजवाग्रे हि, चल्ली किमग्रगामिनी ? ॥९३॥ इत्थं सखीवचोजातैः, क्रोधाद्गर्जितवत्यसौ । सभ्रूभङ्गमुवाचेति, निषिदन्तु वचो विना ॥९४॥ वशीकरणयन्त्राणि, नार्यस्तन्निर्विवादकम् । तत्कटाक्षविलासाग्रे, नराः पाषाणमूर्तयः ॥९५॥ नारीभिश्छलिता नैके, तद्वार्ताधुनिकी नहि । नृदेवदानवेन्द्राश्च, स्त्रीपादप्रणताः खलु ॥ ९६ ॥ अपर्णयेश्वरोऽनाटि, सुरेशोऽहल्यया तथा । गोपीभिर्गोपपोऽनाटि, मुनयोऽप्सरसां गणैः ॥ ९७ ॥ स्वामी सेवक एव, स्याद्युवतिर्बलिनी यदि । या च वशंवदा नारी, तस्या जन्म निरर्थकम् ॥ ९८ ॥

१ मधुरां वाचं । २ पथ्यकरी । ३ पथ्या ।

उक्तञ्च सूक्तमुक्तावल्यां—

कुङ्कुमपङ्ककलङ्कितदेहा, गौरपयोधरकम्पितहारा ।
नूपुरहंसरणत्पद्पद्मा, कं न वशं कुरुते भुवि रामा ? ॥ १६ ॥
संमोहयन्ति मदयन्ति विडम्बयन्ति, निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।
एताः प्रविश्य सदयं हृदयं नराणां, किन्नाम वामनयना न समाचरन्ति ॥ १७ ॥
पञ्चाननं परिभवत्युदरेण वेणीदण्डेन कुण्डलिकुलं शशिनं मुखेन ।
या सा जगत्रयजयप्रथिता नताङ्गी बुद्ध्या कया बत बुधैरबला बभाषे? ॥ १८ ॥

सुवंशजोऽप्यकृत्यानि कुरुते प्रेरितः स्त्रिया। स्नेहलं दधि मथ्नाति पश्य मन्थानरो न किम् ?॥१९॥
गृहीतहस्तकः प्रेयान् प्रेयसीभिर्घरट्टवत् । भ्रमितः पितृमात्रादि–स्नेहं दलयति क्षणात् ॥ २० ॥

सख्यो मानवतीं प्रोचु–र्यदा परिणयेः सखि ! । तदा पतिर्वशं नेयो, वार्तालापेन किं भवेत् ? ॥९९॥ मानवती तदोवाच, यदि परिणयाम्यहम् । उच्छिष्टान्नं प्रदास्यामि, पास्यामि चरणोदकम् ॥ १०० ॥ कारयिष्यामि रक्षां च, पादपीडनमित्यपि । नयेयं वशतामित्थं, तदास्मि मानवत्यहम् ॥ १०१ ॥ सख्य ऊचुर्वचोयुद्धे, वयं त्वया पराजिताः । इत्युक्त्वोत्थाय ताः,

सर्वा जग्मुः स्वं स्वं निकेतनम् ॥ १०२ ॥ जातबालावचः श्रुत्यन्तः, कम्पश्चिन्तयत्यसौ । रूपमस्या मनोहारि, किन्त्वन्त-
र्वज्रनिर्मितम् ॥ १०३ ॥ स्तन्यफेनमुखी किन्तु, साब्धितरणमिच्छति । तथा च पुष्करस्पर्शमपीत्याश्चर्यमीश्वर ! ॥ १०४ ॥
चिन्तिता पश्वसु श्रेष्ठा, सरूपेति निदानतः । विना गुणं वृथा रूपं, शून्यं संख्यां विना यथा ॥ १०५ ॥ एकैकत्रुटियुक्तानि,
रत्नानि निर्मितानि वै । सक्षारो जलधिः सूर्या–चन्द्रौ तापकलङ्कितौ ॥ १०६ ॥ तात तातेति सम्बुद्ध्य, कस्य हर्षाय जायते ।
तथा चास्या निवासेन, पुण्यं पश्यानि किं गृहम् ॥ १०७ ॥ परिणेया बलेनापि, सा मदोद्धतमानिनी । पश्चात्कथं वशं
कुर्यात्पश्यामि तत्परीक्षणम् ॥ १०८ ॥ तद्वचनं वृथा कुर्या, तदा राजाऽन्यथा न हि । इति विचार्य भूपालः, पश्चात्तस्या
गृहं ययौ ॥ १०९ ॥ सा जगाम गृहं स्वीयं, नेक्षितो धरणीधवः । शय्यान्तर्लीनगात्री, चिरं रेमे सनिद्रया ॥ ११० ॥
गेहाङ्गनं सुरभिपादपचम्पकाङ्कम्, ताम्बूलरागमपरं च निजोज्झितं वै । चिह्नं निधाय हृदये परिशुद्धिहेतोः, आगत्य सौधम-
तिखिन्न मनाः स शिश्ये ॥ १११ ॥

इति मानवतीचरित्रे बाल्यक्रीडननामा प्रथमः सर्गः ।

# द्वितीयः सर्गः ।

तद्वृत्तव्यथितात्मा स, निद्रया परिवञ्चितः । प्रतिक्षणं च सस्मार, मानवतीवचोगणम् ॥१॥ करग्रहातुरो जात–स्तद्रूपाकृष्टचेतनः । प्रतीक्षते दिवानाथं, धैर्यहीनो नरेश्वरः ॥२॥ यदाऽनूरुः समागत्य, तमो निरस्यति स्म च । सूर्यो रथं समारुह्य, प्रदिदीपेऽवर्नीं वनीम् ॥ ३ ॥ राजा शय्यां परित्यज्य, नित्यकार्यान्निवृत्य च । गतः परिषदं शीघ्रं, वृत्तदानाय मन्त्रिणे ॥ ४ ॥ आहूय सचिवं सद्यः, सादरं बहुमानितः । कथयामास वृत्तान्तं, रात्रौ तेन यथाश्रुतम् ॥ ५ ॥ पुरो वार्तां सुविज्ञातुं, गत आसं विभावरीम् । एकत्र कन्यकाः पञ्च, दृष्टाः क्रीडन्ति चत्वरे ॥६॥ तासामेकातिजल्पाका, तिक्तवाचं ततान सा । तच्छ्रवणेन क्रुद्धोऽह–मुत्सहे गर्वनाशनम् ॥ ७ ॥ ततस्तया सहोद्वाहः, कर्तव्य इति चिन्तया । निद्राऽपि नागता रात्रौ, प्रतीकारं विचारय ॥८॥ परिदृश्य गृहं तस्या–स्ताम्बूलरागचिह्नितम् । बहिश्चम्पकवृक्षाङ्कं, गच्छेस्त्वं तत्र सत्वरम् ॥ ९ ॥ कथमपि पिता तस्या, वशीकार्यश्छलेन वा । याचनीयः कुमार्यर्थमुपायश्च वितन्वता ॥१०॥ मदर्थं विनतिं कुर्याः, स्मराम्युपकृतिं तव । आजीवनं स्मरिष्यामि, गुणग्रामं तवानघ ! ॥११॥ कन्यया सह वाग्वैरं, नास्त्यपरं मनागपि । तव बुद्धिप्रभावेन, भवेल्लग्नं तदा खलु ॥१२॥ वक्ति स्म सचिवश्चेत्थं, कारयामि तव क्रियाम् । आनयामि तवाज्ञा चेत्, शचीमपि प्रसादतः ॥१३॥ सत्योऽस्मि सेवको नाऽहं, यावल्लग्नं न जायते । आश्वास्येत्थं प्रधानोऽसा–वुत्थितः कार्यसिद्धये ॥ १४ ॥ पश्यन्प्रतिगृहं पुर्यां, प्रविष्टोऽयं

विचक्षणः । अभिमानं दधत् कार्य–दक्षतायाः प्रतिक्षणम् ॥ १५ ॥ एवं परिभ्रमन्नन्ते, दृष्ट्वा चम्पकवृक्षकम् । ताम्बूलरागचिह्नं च, जहर्ष सचिवाग्रणीः ॥१६॥ एष चिह्नांकितं गेहं, प्रविष्टः सेवकान्वितः । प्रधानागमनं दृष्ट्वा, धनदत्तो व्यचिन्तयत् ॥१७॥ धबधबेत्युदतिष्ठत्, शरीरे वेपथुर्महान् । पतन्तं वस्त्रमाधाय, सन्मुखं गतवान्सुधीः ॥१८॥ आनीय गृहमध्ये तस्मा–सनादि प्रदत्तवान् । ताम्बूलं मुखावासार्थं, बद्धाञ्जलिश्च तस्थिवान् ॥ १९ ॥ दर्शनेन कृतीजातो, यथा गङ्गानिमज्जनात् । कृतिनं कुरु भूयो मां, तथा कार्यप्रदर्शनात् ॥२०॥ इत्यादि मधुरालापै–र्ज्ञात्वा सन्मानदक्षताम् । उवाच सचिवस्तुष्टस्तथ्यमागमकारणम् ॥ २१ ॥ नृपस्य महती प्रीति–र्वर्धतेऽनुदिनं त्वयि । अनुभूतं समागत्य, यथाश्रुतं तथा त्वयि ॥ २२ ॥ अमात्यः श्रेष्ठिनं प्राह, वाणिज्यं कीदृशं तव । तथा संततिसौख्यं च, पृष्टः सन्नित्युवाच सः ॥२३॥ प्रवहणैर्विदेशेभ्यो, यातायाते हि मे खलु । संतत्यां बलिकारत्नं, नाम्ना मानवती ध्रुवम् ॥२४॥ सुतास्ति कुत्र सोवाच, सचिवः श्रेष्ठिनं प्रति । आलोकयामि येना–हमाह्वय सत्वरं ततः ॥ २५ ॥ अध्येतुं सा गता शाला–मुक्तवानिति श्रेष्ठिराट् । भोक्तुकामा पराह्णे च, ततः पश्चान्निवर्त्स्यति ॥२६॥ पुत्रिका भवतां गुण्या, कस्मिन्साधीतिनी वद । जैनधर्मं हि श्राद्धानाम–धीत इत्युवाच सः ॥२७॥ रहस्यं तव धर्मस्य, ज्ञापयेभ्य ! यथास्थितम् । येनाहमपि जानीयां, सिद्धान्तान्जैनधर्मगान् ॥२८॥ जीवदयाऽत्र मुख्या स्याद्, पीडयामो न प्राणिनम् । जलं व्यवहरामश्च, निगाल्यैव वयं सदा ॥२९॥ नमस्कारस्य मन्त्राणि, जपामो दृढचेतसा । तेनैव मोक्षसंप्राप्ता, अनेके नृदिवीश्वराः ॥३०॥ शास्त्राणि साक्षिरूपाणि, प्रणीतानि जिनेश्वरैः । श्रद्धास्माकं दृढा तेषु, तत्कर्तृषु विशेषतः ॥३१॥ जिनेशतारकाणाञ्च, पादसेवां विदध्महे । येन कर्माणि दूरं स्युः, शिवस्थानं च हस्तगम् ॥३२॥ त्यक्तकञ्चनकामिन्यो, मुनयो गुरवश्च स्युः । तेषां पवित्रव्या-

ख्यानं, नित्यशः श्रुणुमो वयम् ॥३३॥ प्रतिमा मन्दिरं शास्त्रं, जैनसङ्घश्चतुर्विधः। तेषु सप्तसु मार्गेषु, दानं दद्मो यथोचितम् ॥३४॥ व्रतपौषधमित्यादि, प्रत्याख्यानप्रतिक्रमौ। संसारासारतां ज्ञात्वा, कुर्मो विधिविधानतः ॥३५॥ स्वकीयो यादृशो जीवः, परकीयोऽपि तादृशः। द्वादशव्रतधर्तृणा-मस्माकं तादृशो नयः ॥३६॥ कदापि परनिन्दायां, कालव्यत्ययनं न हि। मृषावादं त्यजामश्च, नागादि पूज्यते न हि ॥३७॥ जीवबन्धवधौ दृष्ट्वा, वेपथुर्जायते हृदि। अतो गहनभेदानां, न वेत्ता ज्ञानिना विना ॥ ३८ ॥ विना ज्ञानेन तत्त्वस्य, परधर्मा वदन्ति यत्। श्रेष्ठोऽस्माकं मतो नान्यो-ऽन्धस्येव गजदर्शनम् ॥ ३९ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

श्रद्धालुतां श्राति जिनेन्द्रशासने धनानि क्षेत्रेषु वपत्यनारतम्।
करोति पुण्यानि सुसाधुसेवनादतोऽपि तं श्रावकमाहुरुत्तमाः ॥ १ ॥
महुमज्जमंसभेसज्जमूलसत्थग्गिजंतमंताइ।
न कयावि हु कायव्वं सड्ढेहि वि पावभीरूहिं ॥ २ ॥
गुरुभणिओ सुत्तत्थो बिंबिज्जइ अवितहो मणे जस्स।
सो आयंससमाणो सुसावओ देसिओ समए ॥ ३ ॥

मृषावाद-परिहारे श्रीमान-तुङ्ग-मानवती-चरित्रम्॥

॥ ८ ॥

द्वितीयः सर्गः ॥

धनदत्तवचः श्रुत्वा, प्रधानो हर्षनिर्भरः। उवाच वचनं चेदं, धन्यो धर्मस्तवाऽनघ ! ॥४०॥ रमझमनदन्ती सा, मानवत्यागता तदा। सप्रश्रयं प्रणम्याथ, पित्रङ्के निषसाद च ॥ ४१ ॥ लावण्यतां तदीयां स, दृष्ट्वा चिन्तयति प्रधीः। स्थाने भूपालरागोऽत्र, रूपराशिशुभाश्रये ॥ ४२ ॥ इभ्यं प्रति प्रधानः स, प्रोवाच मधुरं वचः। स्वीक्रियेथा यदि ब्रूवे, मदीयागमनकारणम् ॥ ४३ ॥ प्रत्युवाच धनश्रेष्ठी, वद वाक्यं मनोगतम्। सेवकोऽयं यथाशक्ति, स्वामिकार्यं करिष्यति ॥४४॥ त्वं कार्यं दर्शयेरित्थं, क्व मे भाग्यमतो वद। न परिवेषयेन्माता, कदापि कथनं विना ॥४५॥ तदा प्रयोजनं प्रोचे, दृष्ट्वा श्रेष्ठिशुभादरम्। कन्याया रूपमालोक्य, राजा रागी बभूव हि ॥४६॥ तस्या उद्वाहनार्थं मां, प्रेषितोऽत्र नृपेण नु। स्वीकार्येदं वचः श्रेष्ठिन्!, विसर्जय प्रसाद्य माम् ॥४७॥ जामाता यदि राजा स्या–न्न क्षतिस्तत्र विद्यते। सुखिनी बालिकाऽपि स्या–न्न भवेद्दुःखिनी कदा ॥ ४८ ॥ गतो नु समयो नायात्, प्रीतिर्न जायते गता। नोल्लङ्घ्योऽतः क्षमापालो, राजाग्रहो हि दुःखदः ॥ ४९ ॥ उक्तश्च सूक्तमुक्तावल्यां—

अतिथिर्बालकश्चैव, राजा भार्या तथैव च।
अस्ति नास्ति न जानान्ति, देहि देहि पुनः पुनः ॥ ४ ॥

अतः प्रसन्नचित्तेन, बाढमिति वचो वद। अन्यथा नृपतिः क्रुद्ध, आपदः पातयिष्यति ॥ ५० ॥ धनदत्तो जगादैवं, भीतिं नो देहि तादृशीम्। नृपवचः सदा मान्यं, सज्ञा कन्या हि सर्वदा ॥५१॥ गत्वा कथय राज्ञे त्वं, मुहूर्त्तं च विशोधय।

इति श्रुत्वा गतोऽमात्यः, समाचारनिवेदने ॥ ५२ ॥ राजा वर्धापनां श्रुत्वा, मन्त्रिणो हृदयंगमाम्। ज्योतिषिणं समाहूय, मुहूर्त्तं पृच्छति स्म सः ॥५३॥ निर्दोषं दिनमावेद्य, हर्षं नीतो नृपोत्तमः। राजा दानेन संतोष्य, दैवज्ञं च व्यसर्जयत् ॥५४॥ उद्गता हर्षकल्लोला, नृपहृदि ममुर्न ते। उत्सवादिकरूपेण, निःससार बहिस्तदा ॥ ५५ ॥ नृपादेशेन भृत्यैर्भूः, सिक्ता निर्मलवारिभिः। पुरं शृंगारितं सम्यग्, धूपः कालागुरोः कृतः ॥ ५६ ॥ पताकातोरणानां च, लम्बन्ते पङ्क्तयोऽम्बरे। यथा घनघटाकाले, नृत्यन्ति केकिनः शुभम् ॥५७॥ समृगमदवासांसि, परिमलं स्रवन्ति हि। प्रतिगृहं मृदङ्गानां, मङ्गलध्वनिना-थितम् ॥ ५८ ॥ धनदत्तोऽपि हृष्टः सन्, शृङ्गारयति मन्दिरम्। शिविकादीनि यानानि, सज्जितानि च तेन वै ॥ ५९ ॥ परिवारसमायुक्तः, सभेरीनादमोहितः। यानं प्रयोज्य भूपालः, सहर्षः संचचाल च ॥ ६० ॥ निजशिरोधृतछत्रैश्चा-मरप्रेरकैरपि। स्रवन्मदगजारूढै-र्हयारूढैश्च संवृतः ॥ ६१ ॥ सनारिकेलपाणिश्च, साक्षातकुङ्कमार्चितः। आडम्बरयुतः प्राप, धनदत्तनिकेतनम् ॥ ६२ ॥ युग्मम् ॥ मुक्ताभिरवकीर्येमं, तोरणाधः स्थितं वरम्। विभाज्य सम्पुटं पश्चान्मण्डपं प्रत्यवेश-यत् ॥ ६३ ॥ विष्टरार्घ्यं च पाद्यञ्च, क्रमेण दत्तवान् धनः। कन्याञ्च स्थापयामास, मङ्गलध्वन्यनन्तरम् ॥६४॥ कामवध्वा काम इव, शच्येवेन्द्रो यथा दिवि। तथैव सर्वे पश्यन्ति, मनोहरवधूवरौ ॥६५॥ पुरोधा अञ्चलेनैतौ, निबद्ध्य च परस्परं। ज्ञापयति मिथो लग्नौ, तथा युवामतः परम् ॥६६॥ तथैव वरमालादि, सम्बध्य ज्ञापयन्तथा। होमादिकं च कृत्वाऽसावकारय-त्प्रदक्षिणाः ॥ ६७ ॥ अम्बरभेदिनो भूता, मङ्गलतूर्यनिःस्वनाः। नार्यो मधुरगीतैश्च, कृपन्ति मानसं तदा ॥ ६८ ॥ पश्यति धववक्त्रं सा, मानवत्यतिहर्षिता। नेत्रे क्षिप्त्वा बहिर्भागेऽवगुण्ठनस्य मध्यतः ॥६९॥ आदाय लप्सिकास्थालीं, भृङ्गारं सर्पिपा-

मपि । दिव्यभूषाम्बरधरा, कन्यामाताऽऽगता तदा ॥ ७० ॥ प्राक्बलानि लात्वा सा, बाला वरार्थमर्पति । पश्चाद्वरोऽपि कन्याया, इति पूर्णो महस्तदा ॥ ७१ ॥ राजाऽदाद्दानमर्थिभ्यो, मानमन्यजनाय च । वधूसखश्च प्रासाद-मगात्श्वशुर-मानितः ॥ ७२ ॥ पशंसन्ति नृपं पौरा, धन्येमौ दम्पती सदा । ब्रह्मणाक्षिविनोदाय, निरमायि द्वयं वरम् ॥७३॥ चिन्तयति धनश्रेष्ठी, सम्बन्धस्त्वतिसुन्दरः । नृपोऽयं मम जामाता, का हानिश्च ममापरा ? ॥ ७४ ॥ शुभालम्बनतोऽकार्यम-शक्यमपि जायते । यथा काञ्चनसंसर्गात्काचो मरकतायते ॥ ७५ ॥ धन्या मे कन्यका यस्मा-ज्जाता राज्ञः सुप्रेयसी । इत्थं हर्षेण संयुक्तः, श्रेष्ठी चिन्तयति स्वयम् ॥७६॥ नृपस्य गुप्तमन्त्रन्तु, न जानन्ति बुधा अपि । चतुष्कर्णश्च यो मन्त्रः, कदा स न हि भिद्यते ॥ ७७ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णस्तु धार्यते ।
द्विकर्णस्य तु मन्त्रस्य, ब्रह्माप्यन्तं न गच्छति ॥ ५ ॥

॥ इति मानवतीचरित्रे मानवतीपाणिग्रहणनामा द्वितीयः सर्गः ॥



## तृतीयः सर्गः ।

महीपमानतुङ्गोऽसौ, हर्षपूरितमानसः । मानवतीसहायश्च, निपसाद स्वमन्दिरम् ॥ १ ॥ पतिमुखं निभाल्यैषा, प्रह्लादिता स्वचेतसि । आश्चर्यं प्राप चित्ते च, राज्ञा सह करग्रहे ॥२॥ व्यापारी क च राजा क, चाद्भुतं मेलने हि नौ । ललाटे लिखितं यत्र, मिथ्या भवति सर्वथा ॥ ३ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

न स प्रकारः कोऽप्यस्ति, येनेथं भवितव्यता । छायेव निजदेहस्य, लङ्घ्यते जातु जन्तुभिः ॥ १ ॥

सा सा सम्पद्यते बुद्धिः, सा मतिः सा च भावना । सहायास्तादृशा ज्ञेया, यादृशी भवितव्यता ॥ २ ॥

कर्मणा निर्मिता मैत्री, शुभावयोः परस्परम् । पतिं वश्यं करिष्यामि, गुणग्रामैर्ममानिशम् ॥ ४ ॥ प्रेमपाशेन बध्नामि, कटाक्षैकेन स्वामिनम् । लक्ष्यं विध्यति धानुष्को, यथैकेनाशुगेन वै ॥५॥ नृपनेत्रद्वयं चारु, नारीरूपरसं पपौ । नाप निर्वृत्ति-मापीय, राजाचित्रवदास्थितः ॥ ६ ॥ कोपसंरक्तचक्षुष्को रुष्टो मानवतीं प्रति । मन आकृष्य तस्याश्चा—वाङ्मुखो निपसाद सः ॥७॥ मानवती तदा चित्ते, विचारयत्यसौ नृपः । रसभङ्गं कथं कुर्यात्, कथं चावाङ्मुखः स्थितः ॥८॥ मयि दुर्गुणलेशोऽपि, दृष्टः किं स्वामिनामुना । मह्यं नालपति प्रीत्या, कारणं भावि तत्र किम् ? ॥ ९ ॥ लग्नप्राद्दिन एवेत्थ—मग्रे किं प्रचलिष्यति ।

मृषावाद-
परिहारे
श्रीमान-
तुङ्ग-
मानवती-
चरित्रम् ॥

॥ १० ॥

मक्षिकाप्रथमग्रासे, भोजनं तत्कथं भवेत् ? ॥ १० ॥ बद्धाञ्जलिस्तदोवाच, मानिनी मानवत्यसौ । भवान्विमुखभावं च, कथं प्राप्य दुनोति माम् ॥११॥ वराक्यां मयि कोपस्ते, युज्यते न हि सर्वथा । चिरभक्तं स्वयं क्षामा, भक्षयेत्को हि दोषभाक् ॥१२॥ लग्ना तवाञ्चलेनाहं, त्याज्या स्यां न कथंचन । तथाकृते मनुष्येभ्यः, क्रुध्यति परमेश्वरः ॥ १३ ॥ नाथ ! वद कृपासिन्धो ! मयाङ्कोऽयं प्रसारितः । नष्टधैर्यं समानेतु-मुत्पादय प्रसन्नताम् ॥१४॥ महाराज ! तवाग्रे मेऽबलायाः कीदृशं बलम् ? । विनतिः पादपातो वा, तदेव नो महद्बलम् ॥१५॥ मानवतीवचः श्रुत्वा, किञ्चिद्दुःसं विहस्य सः । अरुणीकृत्य नेत्रे च, प्रोवाच मान-तुङ्गराट् ॥ १६ ॥ प्रिये ! रुष्टिरियं नास्ति, मनागप्यतना त्वयि । छलेन परिणेताऽहं, पादोदकपिपासया ॥ १७ ॥ उच्छिष्टान्नादिदानेन, तथ्यं कुरु वचस्तव । तथा च मां वशीकृत्य, दर्शय ते पराक्रमम् ॥१८॥ नरपतिवचः श्रुत्वा, भ्रान्ता मानवती तदा । विचिन्तयति सा चेत्थं, स्वामी वक्ति कथं तथा ॥ १९ ॥ विधिना स्नेहहीनोऽसौ, स्वामी दत्तः कुतो मम । प्रत्युत दुःखिनी जाता, व्यतीयुर्मे दिनाः कथम् ? ॥२०॥ सुरतरुरिति ज्ञात्वा, मया भूपः समाश्रितः । स तु कर्मवशाज्जातो, बब्बूलो दीर्घकण्टकः ॥ २१ ॥ मेरुतुल्या मनस्याशा, पुरासीद्भोगसंगमे । दुग्धस्य तक्रमुत्पन्नं, दैवयोगात्किमु भवेत् ॥ २२ ॥ वज्रहृदयभर्त्राऽहं, वञ्चिता परिणीय नु । उत्तार्य कूपके पश्चाच्छिन्नश्च बन्धनं मम ॥२३॥ वा सपत्न्या कयाप्येत्य, निन्दा चाकारि मामकी । कुर्यां कमेत्य तद्वार्तामिह नास्ति च सज्जनः ॥ २४ ॥ सुलक्षणान्वितो दृष्टः, प्राणेशोऽयं नराधिपः । किन्तु प्रथमतस्तेन, दर्शितो वेष आत्मीयः ॥ २५ ॥ नृपा न सन्ति मित्राणि, केषामपि न संशयः । जानामि यदि पूर्वं चेत्, परिणयामि न तदा ॥२६॥ यस्याः स्वामिसुखं नास्ति, तस्या जन्मनिरर्थकम् । तस्मात्पृच्छामि रुष्टं तं, कथं न वदसीति माम् ॥२७॥ स्वा-

मिन् ! ममास्ति को दोषो, यन्न पश्यसि सन्मुखम् । कृपया तन्निगद्य मां, निवारय मनोऽन्यथाम् ॥२८॥ तत्कालं चेदहं हेया, परिणीता कथं त्वया ? । प्रक्षालनाद्धि पङ्कस्य, दूरादस्पर्शनं वरम् ॥ २९ ॥ स्मरसि त्वं पुरा क्रीडे, वक्ष्यसि कुवचांसि यत् । वशंकरोमि भर्तारं, नाथनेनोक्षजं यथा ॥ ३० ॥ वचनानीत्यहं श्रुत्वा, गर्वनिष्कासनाय ते । पर्यणयं त्वया साकं, तथ्यं कुरु वचस्तव ॥ ३१ ॥ कर्णोत्पले सुसंभ्रान्ते, तस्याः श्रुत्वैव तद्वचः । नृपं सोवाच प्राणेश !, क्रीडायां तद्वचो हि मे ॥ ३२ ॥ निर्दोषवचने राजन् ! क्रोधं नो धत्स्व तादृशम् । अङ्के तवोत्तमाङ्गं मे, स्थापितं त्वं दयां कुरु ॥३३॥ विश्वास्य परिणीताऽहं, पश्चात्त्वयैव छिद्यते । घोरपापं कथं मुञ्चेर्विचार्यतां हृदि प्रिय ! ॥३४॥ प्रीतिचोरोऽल्पदोषेण, मा भूस्त्वं प्राणजीवन ! । मान्यानि मे वचांसि भो, अवलान्तो न लीयते ॥३५॥ यथा यथा विनम्राऽहं, तथा त्वं जातकोपनः । तप्तायसि जलक्षेपं, मा कार्षीर्बुद्धिमान्नृप ! ॥३६॥ कुरु खड्गपिधानं च, सर्वकार्यविचारतः । चलिष्यति न नाना स्त्रीं, मुष्टिर्बद्धा भवेद्धरा ॥ ३७ ॥ श्रुत्वा वचांसि तस्याः, स धत्ते चकितमात्मनि । यथा क्षतोपरि क्षार-पातेन भवति व्यथा ॥ ३८ ॥ संकुच्य भ्रमरे ऊचे, कटुवाणीं नृपोत्तमः । तरुणीनां पुरुषाग्रे, कियन्मात्र बलं वद ॥ ३९ ॥ यथेच्छं नाऽकरोदित्थं, दुर्गान्जयति निर्जयान् । हन्ति सिंहादिहिंस्रांश्च, मदस्राविगजानपि ॥ ४० ॥ वशं नयति देवादीन्, जले च सेतुबन्धनम् । चालयेद्गिरिवर्यं च, भनक्ति चायसार्गलाम् ॥४१॥ नराणां सेविका नारी, जानंतीति समे जनाः । यदि मुञ्चेत्पुमाँस्तां तत्, नास्ति तस्याः स्थितिः क्व च ॥ ४२ ॥ अनेकोपायतः स्त्रीणा-मुदरं पूर्यते जनैः । गृहकार्यं वराकी स्त्री, करोति सेविकेव सा ॥४३॥ आकर्ण्य वचनं भर्तुश्चञ्चचित्ता हि मानिनी । उवाच स्वामिनं वाणीं, मनश्चञ्चलकारिणीम् ॥ ४४ ॥ दैवनारीचरित्रयोः, पारो न पार्यते कदा । नारी करोति

यत्कार्यं, तस्मिन्न नुः समर्थता ॥ ४५ ॥ कुर्यां नम्रं यदि त्वां चे–दहं नारी सुलक्षणा । यदि तथ्यप्रतिज्ञाहं, तदैव धन्यभाग्यभाक् ॥ ४६ ॥ वनितावचनं श्रुत्वा, चिन्तयामास भूपतिः । आहूयामात्यमादिशदित्यतिरक्तलोचनः ॥ ४७ ॥ प्रासादमेकस्तम्भं त्वमुद्घाटयाधुना प्रिय ! । सरोऽस्ति सजलं तत्र, विलासाय महामते ! ॥ ४८ ॥ भोज्यपेयादि वस्तूनि, सत्वरं भर तद्गृहे । तथाकृते स भूपालस्तत्रागान्मानिनी सखः ॥ ४९ ॥ गत्वा नारीं प्रति प्रोचे, वस त्वमत्र सर्वदा । अहं वार्तां तव ज्ञातुमागमिष्यामि वत्सरे ॥ ५० ॥ किन्तु पातय मां पादौ, दासं च कुरु सर्वदा । चिन्तां त्यक्त्वा वचः पाल्यं, विसरेर्न कदाहि तत् ॥५१॥ इत्युक्त्वा बहिरावासात्, यंत्रं दत्वा स भूपतिः । आरक्षकान्परिस्थाप्य, पश्चान्निवृत्तवाँस्ततः ॥ ५२ ॥

॥ इति मानवतीचरित्रे मानवतीत्यागनामा तृतीयः सर्गः ॥

# चतुर्थः सर्गः ।



वियोगिनी वसत्येक–स्तम्भके सप्तभूमिके । प्रासादाभूपणे सौधे, निन्दन्ती कर्मसञ्चयान् ॥१॥ एकेन्द्रियाकान्जीवान्, पीडयित्री सदैव किम् । क्षिप्त्वा तिलयन्त्रे किं, प्राणिनोऽहं बलादपि ॥२॥ अवर्णवादाः किं दत्ताः, कोपोपहतचेतसा । वञ्चिता व्यवहारे वा, नैके किं सरला जनाः ॥ ३ ॥ बालाः स्तनंधया किंवा, गृहीता रुदनान्विताः । पिपीलिकाबिलानि किं,

पूरितानि मदान्धया ॥ ४ ॥ व्रतं स्वीकृत्य वा कृत–मखाद्यवस्तुभोजनम् । पापकर्मफलं सर्वे–मुदितमधुना मम ॥ ५ ॥ परमेश्वर ! किं दत्तो ?, वियोगः स्वामिनो मम । विपरीतं कृतं किन्तत्, लक्षणं न शुभं तव ॥६॥ दत्वाऽबलावतारं च, वियोगः स्वामिना सह । तथा पितृवियोगश्च, निर्दयेन त्वया कृतः ॥ ७ ॥ कुलपूज्यश्च देवोऽपि, सेवितो नित्यशोभया । अधुना तौ गतौ कुत्र, दुःखिनीं मां विमुच्य हा ! ॥८॥ निष्ठुरस्य नम्रतायै, यतनीयं मया सदा । मुक्त्वा विलपनं धार्यं, धैर्यमेव वरं ननु ॥९॥ दुःखनाशे तपः श्रेष्ठं, विचार्येति तपोऽचरत् । दृढीकृत्य मनः सम्यग्, नमस्कारं जपेत्तदा ॥ १० ॥ निःसंशयं प्रमुच्येत, धर्मसहाय आपदा । यथेच्छं सुखमादाय, स्वर्गं मोक्षं च गच्छति ॥ ११ ॥ प्रतिक्रमणयुग्मं च, निःशंकं कुर्वती सदा । सामायिकव्रतं चापि, वशतायै नृपस्य सा ॥ १२ ॥ व्यत्ययुर्दिवसास्तस्या, निःश्वसन्त्या हि सौधतः । परिहृता अलङ्कारा, अञ्जनं मञ्जनं तथा ॥ १३ ॥ विरागे मग्नचेताः सा, विषयान्दूरमुज्झति । उद्योगं कर्तुकामा च, विचारयति चेतसि ॥ १४ ॥ एकदा मध्यरात्रौ सा, जागृता वीरसुन्दरी । वातायनं समुद्घाट्य, चाहूतो वृद्धयामिकः ॥ १५ ॥ शीघ्रं स समागत्य, प्रोवाच सुन्दरीं प्रति । भवत्याः किं मया कार्यं, सेवकायादिशत्वरम् ॥१६॥ सन्देशः कथनीयश्चेन्नृपाय वद मातृके ! । निःसंशयं मनश्चिन्तां, दूरीकर्तुं कुरु त्वराम् ॥१७॥ नृपस्य किं त्वया छिन्नं, यत्तेन त्वं वियोगिनी । दुःखमिदं च दुःसह्यं, स्वाम्यग्रे न तु मे बलम् ॥१८॥ मानवती ब्रवीति सा, सनिःश्वासं च यामिकम् । भ्रातर्मे तव योग्यं च, कार्यमस्ति शृणु ह्यदः ॥ १९ ॥ सिद्धकार्यपुरस्कारं, न विस्मरामि तावकम् । उपकारं तथा चाहं, स्मरामि वीर ! सर्वदा ॥ २० ॥ कृपया कुरु मे कार्यं, सत्वरं गच्छ यामिक ! । गृह्यतां स्वर्णतन्तुस्रक्, मोचय विरहादिमाम् ॥ २१ ॥ यामिको लोभसंयुक्तः, प्रत्युवाचेति मानिनीम् । स्वामिनि !

वद कार्यं मे, संसाध्य प्रणमाम्यहम् ॥ २२ ॥ मानवती वदत्येवं, विज्ञापय पितुर्मम । परिणीय छलेनायं, वियोगमकरोन्नृपः ॥ २३ ॥ एकस्तम्भे निवासो मे, एकाकिन्या हि दुःखदः । पत्रपट्टेऽश्रुमष्या साऽलिखदङ्गुलिलेखिनी ॥ २४ ॥ गृहित्वा तद्गतो वृद्धो, यथा जानाति कोऽपि न । धनदत्तगृहं गत्वा, श्रेष्ठी पूत्कारितस्तदा ॥ २५ ॥ श्रेष्ठिनोद्धाटिते द्वारे, वृद्धः पत्रं प्रदत्तवान् । मुखेन सकलं वृत्तं, कथितश्च यथातथम् ॥ २६ ॥ विपिष्मिये धनश्रेष्ठी, दृष्ट्वा चीवरपत्रकम् । प्रसार्य तत्क्षणं पत्रं, वाचयति स सम्भ्रमम् ॥ २७ ॥ अश्रुलिखितवर्णानां, दर्शनेन चिखेद सः । गुप्तवार्तांश्च विज्ञाय, स्थिरचित्तेन पश्यति ॥ २८ ॥ भवतां कृपया मेऽत्र, कुशलं वर्तते सदा । विज्ञप्तिः परमेकेय–मवधार्या गुणाकर ! ॥ २९ ॥ भूपतिना करग्रहो, मम सोत्सवतः कृतः । विरहस्तेन दत्तोऽद्य, तदुपायो विचारितः ॥३०॥ भवदागारमारभ्य, मद्गेहं यावदन्तरे । भित्वा भूमिं विधातव्या, सुरङ्गा सत्वरं त्वया ॥३१॥ आगम्यते मया येन, भवन्तं प्रति नित्यशः । करिष्यामि तदा तात !, वार्तां चैवातिदुःखदाम् ॥३२॥ एकाकिन्याश्च मे वासः, पूज्यैकस्तम्भसद्मनि । सुज्ञेषु बहुना किं वा, गुह्यं गेयं हि स्तोकतः ॥३३॥ इति निर्वाच्य स श्रेष्ठी, वेपथुं प्राप सत्वरम् । प्रत्युत्तरं लिखित्वा स, सेवकाय प्रदत्तवान् ॥३४॥ वृद्धो मानवतीं प्राप्य, चकार हर्षितां ततः । इतश्च धनदत्तेभ्यो, मूढः कर्तव्यकर्मणि ॥३५॥ अथ प्रातः समुत्थाय, गृहकारान्समानयत् । रहस्यं सकलं तेभ्यः, कथयामास विस्तरम् ॥३६॥ गोपनीयमिदं कार्यं, करोमि वः प्रसन्नताम् । कर्मकरास्त्वरापन्ना, जाताः कार्यस्य सिद्धये ॥ ३७ ॥ कालक्रमेण मार्गोऽसौ, जातः सर्वाङ्गसुन्दरः । मानवतीति विज्ञाय, प्रफुल्लवदना बभौ ॥ ३८ ॥ सुरङ्गापूर्तिसंदेशो, दत्तः कर्मकरैस्तदा । श्रेष्ठिसन्मानिताः सर्वे, गताः स्वस्थानकं प्रति ॥ ३९ ॥ मानवती पथा तेन,

प्रविष्टा पितृसद्मनि। प्रणम्य पितरौ हर्षात्, वृत्तमुक्तं यथातथम् ॥ ४० ॥ पितरौ कथयन्तौ यत्, शोकश्च क्रियते मुधा। जलं पीत्वा गृहप्रश्नः, कुत्रत्या रीतिरीदृशी ?॥४१॥ तत्तथा सा तदोवाच, वीणां यथानयेः पितः !। सरलीकरवाणि त-द्राजानं तं मदोद्धतम् ॥ ४२ ॥ हट्टादानाय्य वीणां स, मानवत्यै समर्पयत्। तयापि योगिनिरूप-माधाय चोद्धृता वीणा ॥४३॥ नृपस्य वशनार्थे सा, मुक्तकेशी तदाऽभवत्। भस्मभूषितगात्री च, ललाटे घुसृणार्चनम् ॥ ४४ ॥ कच्छविभूषिता कट्यां, तत्पादयो-रुपानहौ। कण्ठे रुद्राक्षमालां च, नयने रक्ततायुते ॥ ४५ ॥ शरीराच्छादने पीत-शाटिकायोगपट्टके। यथा सरस्वती साक्षात्, कन्धरस्थितवीणया ॥ ४६ ॥ पित्रोश्च संमतिं लब्ध्वा, योगिनीवेषसंयुता। उज्जयिन्यां च बभ्राम, भ्रमन्ती प्रतिमन्दिरम् ॥ ४७ ॥ गौराङ्गी कोकिलालापा, चित्तं हरति जीविनाम्। नरनार्यो भ्रमन्ति त-द्गीतसंक्रुष्टचेतनाः ॥ ४८ ॥ प्रशंसा स्फूर्ति-मापन्ना, प्रतिरथ्यं गृहे गृहे। वार्तां सर्वां परित्यज्य, योगिनीवार्तमादृतम् ॥ ४९ ॥ दिनचर्यामिमां कृत्वा, गत्वा सायं पितु-र्गृहम्। तौ समाश्वास्य गच्छन्ती, सासीन्निजनिवासकम् ॥ ५० ॥ पुनः सुरङ्गया प्रात-र्योगिनीवेषधारिणी। निर्गत्य गान-कार्याय, गच्छति प्रत्यहं पुरम् ॥ ५१ ॥ प्रजामुखान्नृपेणाऽपि, गीतकीर्तिर्बहु श्रुता। योगिनीरूपसंद्रष्टु-मुत्सुकश्च तदाऽभवत् ॥ ५२ ॥ आह्वानाय प्रधानं स, प्रैषीत्तस्याश्च सन्निधौ। सोऽपि गत्वा च तां नत्वा, प्रोवाच मधुरां गिरम् ॥ ५३ ॥ पिपासु-र्दर्शनानां ते, नृपो ह्वयति सत्वरम्। तत्कृपया समागच्छ, वीणां दत्वा करे मम ॥५४॥ मनो विकसितं तस्या, वीणामादाय सत्वरम्। प्रचचाल प्रधानेन, सह राजसभां प्रति ॥५५॥ यदा सभां प्रविष्टा सा, दृष्टा राज्ञा च योगिनी। तदोत्थायापतत्पादे, योगिन्या बहुमानतः ॥५६॥ सिंहासने परिस्थाप्य, प्रोवाच भूपतिर्वचः। आगच्छसि कुतः पूज्ये !, कुत्र निवास आत्मीयः ?॥५७॥

त्वयि यथाश्रुतं दृष्टं, नगरे स्वागतं तव । यन्नेत्रे मेऽपि साफल्यं, प्रापतुर्दर्शनेन हि ॥५८॥ धन्या त्वं यदहोरात्रं, प्रभुभक्तिपरायणा । शुद्धमार्गं चलन्ती च, ध्यानमग्नाऽसि भद्रिके ! ॥५९॥ परन्तु योगिनीवेषः, कथं बाल्ये धृतस्त्वया ? । इति चिन्तानिमग्नं माम्, स्पष्टं कृत्वा समुद्धर ॥६०॥ तदा मानवती प्रोचे, शृणु भूपाल ! मे वचः । अतीतायाश्च मे वार्ता, जानाति कोऽपि नो कदा ॥ ६१ ॥ भ्रमन्ती सर्वदा देशे, नानातीर्थेषु सादरा । अवन्तीदर्शनार्थाह–मागताऽत्र सुखं स्थिता ॥ ६२ ॥ आगन्ता कश्च को गन्ताऽऽयान्ति सर्वेऽम्बवारिणा । प्रभुभक्तिरतः श्रेष्ठः, संसारो दुःखसागरः ॥ ६३ ॥ माता कस्य पिता कस्य ? पत्नी भ्राता च कस्य च ? । एकाकी जीव एवान्ते, याति कर्मानुसारतः ॥६४॥ तस्यैव जन्मसाफल्यं, शान्तिदा यस्य वासराः । आनीतं किञ्च नेता किं, संसारः स्वार्थसाधकः ॥ ६५ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

चेतोहरा युवतयः स्वजनोऽनुकूलः, सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः ।
वल्गन्ति दन्तिनिवहास्तरलास्तुरङ्गाः, सम्मिलने नयनयोर्न हि किञ्चिदस्ति ॥ १ ॥

श्रियो विद्युल्लोलाः कतिपयदिनं यौवनमिदं, सुखं दुःखाघ्रातं वपुरनियतं व्याधिविधुरम् ।
दुरापाः सत्पत्न्यो बहुभिरथवा किं प्रलपितै–रसारः संसारस्तदिह निपुणं जाग्रत जनाः ! ॥ २ ॥
घनापायः कायः प्रकृतिचपला श्रीरपि चला । महारोगा भोगाः कुवलयदृशः सर्पसदृशः ।

गृहावासः पाशः प्रणयिषु सुखं स्थैर्यविमुखं । असारः संसारस्तदिह निपुणं जागृत जनाः ! ॥३॥
भोगास्तुङ्ग तरङ्गभङ्गचपलाः प्राणाः क्षणध्वंसिनः, स्तोकान्येव दिनानि यौवनसुखं प्रीतिः प्रियेष्वस्थिरा
तत्संसारमसारमेव निखिलं बुद्ध्वाऽऽत्मपापक्षये, लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥४॥
आत्मसुखार्थं क्रियते भोगः, पश्चादेष शरीरे रोगः । रोगे जाते मरणं शरणं, तदपि न मुञ्चति पापाचरणम्

श्रुत्वैतन्नृपतिर्हृष्टः, कृत्वाऽञ्जलिमुवाच ताम् । वीणां संयोज्य गायेस्त्वं, स्वीकुरुष्व वचो मम ॥ ६६ ॥ उत्कण्ठितं नृपं दृष्ट्वा, गीतं मधुरया गिरा । तथा च वादिता वीणा, भूपादिर्लीनतामगात् ॥ ६७ ॥ चिन्तयति तदा राजा, चेयं मानवती समा । किं तया वञ्चितुं मां हि, कृतेयं योजना शुभा ॥ ६८ ॥ किन्तु सा रक्षिता यत्नै–र्येनाऽऽगच्छति नो कदा । प्रत्यक्षं करवाणि तत्स्वयं गत्वा निवासकम् ॥६९॥ चलचित्तं नृपं दृष्ट्वा, चिन्तयामास योगिनी । कदाचिद्द्रष्टुकामोऽयं, नृपः सौधं गमिष्यति ॥ ७० ॥ विचार्येति धृता वीणा, नृपं पृष्ट्वा गता ततः । पितृगृहात्सुरङ्ग्या, गतैकस्तम्भकं क्रमात् ॥७१॥ योगिनीवेषमुत्तार्य, पूर्व एव तया धृतः । दोलायां सा ततः सुप्ता, तावन्नृप उपस्थितः ॥ ७२ ॥ द्वारमुद्घाट्य राजा सा, चागतो यत्र मानिनी । दोलासुप्तां च तां दृष्ट्वा, विश्वस्तो हृदि तत्क्षणम् ॥ ७३ ॥ चकितो वदतीत्थं स, वराकी सा तु निद्रिता । उपायं सा न जानाति, पादपातनकारणम् ॥ ७४ ॥ गत्वा मानवतीं राजा, निद्राममोचयत्ततः । भ्रान्ता चोत्थाय राजानं, प्रणिपत्येत्युवाच सा ॥ ७५ ॥ स्वामिन् ! तन्महदाश्चर्यं, गृहे मे भवदागमः । पादावधारणेनैव, पवित्रा

मृषावाद-
परिहारे
श्रीमान-
तुङ्ग-
मानवती-
चरित्रम् ॥

॥ १४ ॥

सेविका कृता ॥ ७६ ॥ किञ्चाज्ञानतयाकारि, किमत्रागमनं वद । अस्ति मे शपथस्तुभ्य-मित्युक्त्वा पाणिमग्रहीत् ॥ ७७ ॥ राजोवाच समाचारा-न्ज्ञातुमद्य समागतः । तर्हि वद प्रिये ! किञ्चिद-पेक्षसे हि वस्तुकम् ॥ ७८ ॥ मानवती प्रतिब्रूते, स्नेहेनैतावता सृतम् । भवतोऽहं कृपां मन्ये, यदागाः सेविकागृहम् ॥ ७९ ॥ एकस्तम्भे च सौधेऽस्मिन्, विना त्वां वासयेद्धि कः ? । प्रिय ! तं ते गुणग्रामं, कथञ्चिद्विस्मरामि न ॥८०॥ मानतुङ्गस्तदोवाच, दोषो मे नास्ति तत्र कः । प्रथमतस्त्वया जिह्वा, कथं वशीकृता न हि ? ॥८१॥ अमृतं च विषश्चैव, जिह्वायामेव संस्थिते । रसश्च विरसश्चापि, तत्रैव समुपस्थितौ ॥ ८२ ॥ शृण्वन्ति कोकिलावाच-मुड्डापयन्ति वायसान् । जिह्वादोषेण बन्धुश्च, युध्यते बन्धुना सह ॥ ८३ ॥ गीर्न वाच्याऽविचार्यैव, यतो दुःखं तु वर्धते । निदर्शनं तु तत्रैव, प्रत्यक्षं त्वं भवेर्ननु ॥ ८४ ॥ उवाच मानिनी वाणी-मयोग्यं कथितं न हि । पालयामि वचांसि मे, प्रोक्तानि बालखेलने ॥ ८५ ॥ पातयामि यदि पादे, मन्यतां सत्यवाक् तदा । त्वया कार्यं कृतं सर्वं, किन्तु प्रभुः सहायकः ॥ ८६ ॥ अश्रौषीत्तद्वचो भूप-स्तस्यै भृशं चुकोप सः । तथाऽरुणीकृते नेत्रे, यथाग्निर्घृतसेचनात् ॥ ८७ ॥ रे रे कामिनि ! निर्गुणे !, निर्लज्जा दृश्यते ननु । मुञ्चसि न कदाग्रह-मतस्त्वं दुःखिनी भव ॥ ८८ ॥ सौधेऽस्मिन्वनितां त्यक्त्वा, तत्क्षणमुत्थितो नृपः । यन्त्रादिकं पुनर्दत्वा, गतो राजसभां प्रति ॥ ८९ ॥ मानवत्युपतातं सा, गत्वा जाता च योगिनी । अगच्छन्नगरं पश्चा-त्तथा नृपसदोगृहम् ॥ ९० ॥ भूपतिर्योगिनीपादौ, स्वोत्तमाङ्गे मुदा दधन् । शृण्वन् गीतानि नित्यं च, तस्या आसक्ततां ययौ ॥ ९१ ॥ पातितः पादयोः स्वामीत्येकवाक्यं प्रपूरितम् । चरणोदकपानाय, योगिन्यद्य व्यचिन्तयत् ॥ ९२ ॥ तस्या अग्रे नृपेणाऽपि, मुक्तं मानं च दूरतः । कर्णौ दत्वा स

गृह्णाति, वीणानादान् मनोहरान् ॥ ९३ ॥ करौ संयोज्य भूपाल, उवाच तां प्रति तदा । दासरूपेण मां रक्ष, वेतनेन विना शुभे ! ॥९४॥ त्वयात्रागत्य गीतेन, द्राग्नीतो वशतामहम् । वियोगीकृत्य कुत्राऽपि, न त्वं गच्छेः कृपानिधे ! ॥९५॥ सर्वदैव वसाऽत्र त्वं, सम्भालयामि नित्यशः । शुश्रुषां च करिष्यामि, सर्वप्रकारतः स्वयम् ॥ ९६ ॥ त्वां विनाऽर्धक्षणं सोढुं, मया न शक्यते कदा । अतोऽत्र नो वसेश्चेत्त्वं शिष्यं कृत्वा नयेः सह ॥९७॥ योगिनि ! किं मया छिन्नं, यन्मायां चेदृशी कृता । मनोवाक्कायदानेन, जातोऽद्याकिञ्चनः स्वयम् ॥ ९८ ॥ भृत्यास्ते मादृशा नैके, किन्त्वेकैवासि मे सदा । श्रुत्वेत्थं प्रत्युवाच सा, रक्षिता कोऽपि मे न हि ॥ ९९ ॥ योगी भोगी मिथः स्नेहं, न कुर्वाते कथञ्चन । वसेदेकत्र योगी न, योगं साध्नन्सदाऽटति ॥१००॥ योगी मित्रं कदापि न, निर्भीको निःस्पृहस्तथा । त्यक्तपितृकयोगिनी, सा कथं त्वयि स्निह्यति ? ॥१०१॥ यत्त्वया वासनीया स्यां, मन्यस्वैकं वचो मम । तच्छ्रुत्वा नृपतिर्ब्रूते, ब्रूष्व वाचं मनोरमाम् ॥ १०२ ॥ कुतोऽस्माकं तथा भाग्य–मादेशः क्रियते तव । दृढाग्रहं नृपस्येत्थं, ज्ञात्वा सोचे वचस्तदा ॥ १०३ ॥ यदि दूरे गच्छेस्त्वं, तर्ह्यवसं तवान्तिकम् । लक्षलक्षापशब्दा मे, सहनीयास्त्वया सदा ॥ १०४ ॥ यदि विमुच्य मां चेत्त्वं, दूरं वसेः क्षणं तदा । उत्थाय प्रचलिष्यामि, सत्यमस्ति वचो मम ॥ १०५ ॥ प्रणिपत्य नृपः प्रोचे, पालयिष्यामि तत्समम् । तदाग्रहेण भूपेन, निवासस्तत्र स्वीकृतः ॥ १०६ ॥ योगिनीनृपयोश्चित्ते, मिलिते दृढभावतः । शर्कराक्षीरयोः सङ्गो, यथा संजायते शुभः ॥ १०७ ॥ राज्यकार्यं मुमोचासौ, तया वशीकृतः किमु । तस्या वासं विमोच्य न, गच्छत्यन्यत्र कुत्रचित् ॥१०८॥ निर्मलो भूपतिर्भेदं, तस्यां पश्यति नो कदा । श्वेतमात्रं पयः कृत्वा, चित्ते धारयति सदा ॥ १०९ ॥ योगिनी नृपमान्या सा, भागीरथी यथाऽऽगता । तस्या मोहे निम-

ग्रोऽसौ, कृतार्थं मन्यते निजम् ॥ ११० ॥ रञ्जयति क्षणं भूपं, पादे नमयति क्षणम् । न्यायेन दुग्धदण्डस्यः, ताडयति प्रतिक्षणम् ॥ १११ ॥ क्षणं पादप्रहारं च, बालसोदरलालनम् । ताडयति यथा सा तं, लिलेह भूतलं तथा ॥ ११२ ॥ आचरति नृपश्चेत्थं, विरोधो न यथा भवेत् । गमिष्यत्यन्यथा सा तु, पक्षिणीव स्थलादितः ॥ ११३ ॥ सहते ताडयित्रीं तां, पटहो दण्डिकां यथा । तस्या नृपो वशीभूतो, यथा शच्याः पुरन्दरः ॥ ११४ ॥ गुणिनो गुणिषु वश्या, मणय इव हेमसु । वार्ताश्च रसिकास्तेषां, प्रत्यक्षममृतस्रवाः ॥ ११५ ॥ गुणः सम्पूज्यते सर्वै-र्घटे तेन जलं धरेत् । सेव्यन्ते गुणिनो देवैः, भ्रमरैः पङ्कजं यथा ॥ ११६ ॥ आच्छादयति दोषान्वै, गुणैः कोऽपि यदि भवेत् । यथा फणिपतेर्दोषान्, गोपयति मणिर्गुरून् ॥ ११७ ॥

उक्तञ्च सूक्तमुक्तावल्याम्—

दोषाः किन्नाम कुर्वन्ति, गुणापहृतचेतसाम् । केतकीकुसुमं भृङ्गः, खण्ड्यमानोऽपि सेवते ॥ ६ ॥
दोषमपि गुणवति जने, दृष्ट्वा गुणरागिणो न खिद्यन्ते । प्रीत्यैव शशिनिपतितं, पश्यति लोकः कलङ्कमपि । ७
निरसान्यपि रोचन्ते, कर्पासस्य फलानि नः । येषां गुणमयं जन्म, परेषां गुह्यगुप्तये ॥ ८ ॥
ये गुणिनो न जानन्ति, नाद्रियन्ते च ये गुणान् । अजागलस्तनस्येव, तेषां निष्फलजीवनम् ॥९॥
गुणेष्वनादरं भ्रातः !, पूर्णश्रीरपि मा कृथाः । सम्पूर्णोऽपि घटः कूपे, गुणच्छेदात्पतत्यधः ॥ १० ॥

गुणेष्वेवादरः कार्यः, किमाटोपैः प्रयोजनम् ?। विक्रीयन्ते न घण्टाभि-र्गावः क्षीरविवर्जिताः ॥११॥
संधयेत्सरला सूची, वक्रा छेदाय कर्तरी । अतो विमुच्य वक्रत्वं, गुणानेव समाश्रयेत् ॥ १२ ॥

तथा गुणगणं ज्ञात्वा, त्रिकरणैश्च योगिनी । वाद्यगानविशेषैश्च, तदा प्राह्लादयन्नृपम् ॥ ११८ ॥ भ्रमन्ती नगरे सेयं, वशं नयति मानुषान् । अपि तातगृहं गच्छेत्, स्वावासं च सुरङ्गया ॥ ११९ ॥ यामिकेनालपन्ती च, पृच्छत्यमोघसंमतिम् । इतश्च योगिनीं विना, क्षणार्द्धं राट् न तिष्ठति ॥ १२० ॥ एवं कियान्गतः कालो, राजाऽपि वशतां गतः । मनोवाक्कायमर्पित्वा, नाम्नैव नृप आस्थितः ॥ १२१ ॥

इति मानवतीचरित्रे मानवत्या योगिनीभवनं राज्ञश्च पादपातननामा चतुर्थः सर्गः ।

---

## पञ्चमः सर्गः ।

---

अवन्तीतस्तदा काले, पूर्त्यर्थमुदरस्य वै । अवाक्पथमनुसृत्य, चचालैको वणिक्सुतः ॥ १ ॥ अनुक्रमेण प्राप्तः स, मुंगिपत्तनपत्तनम् । उष्णांशुतापतप्तात्मा, वृक्षच्छायामुपाविशत् ॥२॥ कस्मै पौराय चाप्राक्षीत्, शास्ति को नगरीमिमाम् । उत्तरं दत्तवान्सोऽपि, दलस्तम्भनराडिति ॥ ३ ॥ महिषी गुणमञ्जरी, सर्वकलान्विता सती । तस्या रत्नवती कन्याऽ-नुपमा गुण-

रूपतः ॥ ४ ॥ अधुना बालिका सैवा–गन्ता वसन्तक्रीडने। इष्यते नेत्रशान्तिश्चेत्, कश्चित्कालः प्रतीक्ष्यताम् ॥५॥ पान्थश्चि-
न्तयत्येवं, प्रेक्षणं प्राणतः शुभम्। सायाह्ने च गमिष्यामि, विचार्यैवं श्रितस्तरुम् ॥ ६ ॥ यावत्क्षणं स्थितः पान्थ-स्तावद्बाला
समागता। ससखी च गतोद्यानं, क्रीडासमुत्सुका ततः ॥७॥ मिथो दोषं गले धृत्वा, काश्चिद्दत्वा च तालिकाम्। इत्थमारे-
भिरे खेलं, गत्वा क्रीडावनं समाः ॥८॥ उत्सुका गोपने काश्चि–ल्लतावेश्म विशन्ति च। रत्नवती क्षणैकेन, शोधयति समास्तदा
॥९॥ काश्चित्कदम्बगुच्छेषु, गोपयन्ति लघुं तनुम्। श्रमबिन्दून्स्रवन्ति ते, मुक्ता इव दिदीपिरे ॥१०॥ काश्चित्कुसुमकन्दुकान्,
मिथः क्षिपन्ति हर्षतः। विशीर्णकुन्तलाः काश्चि–द्धावन्तीतस्ततस्तदा ॥ ११ ॥ यथोर्वशीन्द्रसद्मतः, समागतात्र कानने।
वनशोभा तथैवाद्य, निमित्तं ऋतुराडभूत ॥१२॥ पथिको भूपकन्यान्ता, वीक्षतेऽधीरया दृशा। प्रच्छन्नश्चौरवद्भूत्वा, नैवोवाच
वचस्तथा ॥ १३ ॥ रत्नवती ददर्श त-मानेतुममुचत्सखीम्। सापि गत्वा नरं तञ्च, सत्वरं च समानयत् ॥ १४ ॥ वणिग्र-
त्नवतीं नत्वा, सन्मुखस्तत्र सुस्थितः। पृच्छति राजपुत्रीति, क्व गमी कुत आगतः? ॥१५॥ सोपि प्रोवाच धन्याया, उज्जयि-
न्याः समागतः। या मानतुङ्गभूपाल–पातिव्रत्ये स्थिता क्षितौ ॥ १६ ॥ गुणरूपादिभिर्यस्य, यौवनमधिकं कृतम्। पपीः
प्रतापपीडातः, सायं प्रशमनायते ॥ १७ ॥ कालक्रमेण संवृद्धं, यशो यस्य सुनिर्मलम्। स्थानाभावेन पृथ्वीतो, गतं स्वर्गेऽपि
नो ममौ ॥१८॥ मानतुङ्गस्वरूपाग्रे, कामदेवो वृथा भवेत्। विचार्येति महादेवोऽस्थापयत्स्वर्गसद्मनि ॥१९॥ कल्लोलकश्चना
स्नातृ–याचकसंयुता तथा। पर्वतराजनिःसृता, दत्तिगङ्गाऽस्ति तद् गृहे ॥२०॥ यस्य दृशा स नाश्लिष्टो, निष्फलं तस्य जीवनम्।
वर्णनैः पार्यते नैव, प्रत्यक्षदर्शनं विना ॥ २१ ॥ रत्नवती स्तुतीः श्रुत्वा, तस्मिन्वभूव रागिणी। परिणेतुं च तत्काल-मुत्कण्ठा-

मादधे हृदि ॥२२॥ त्यक्त्वा वसन्तकेलिं सा, संप्राप्ता तत्क्षणङ्गृहं । अन्यकार्यं परित्यज्य, मानतुङ्गं न्यचारयत् ॥२३॥ चेटीमुवाच सा कन्या, गतं तु शैशवं मम । मन्ये यौवनसम्पूर्णं, शरीरं वर्तते खलु ॥२४॥ परिणेतुमनाश्चाहं, भोगान्भोक्तुमनास्तथा । दामि त्वामतो मेऽर्थं, पूरयेरुपकारिणि ! ॥२५॥ उज्जयिनीपतिः प्रेम्णा, परिणेयोऽन्यथाऽनलः । मातरं वद गच्छ त्वं, कृपां कुरु मयि पराम् ॥ २६ ॥ तत्क्षणं सा प्रधाविता, राज्ञीसान्निध्यमागता । वृत्तान्तं कथयामास, कुमार्याश्च यथोदितम् ॥२७॥ महिष्या गुणमञ्जर्या, निवेदितं नृपान्तिके । यत्कुमारी समुत्कण्ठा, मानतुङ्गकरग्रहे ॥२८॥ राजाप्युवाच हे राज्ञि !, विषादं कुरु नो वृथा । तदीच्छां पूरयिष्यामि, तेन सह करग्रहात् ॥२९॥ आश्वासिता कनी मात्रा, राजवाक्यं च श्रावितम् । तस्माद्बालाहृदो हर्षो, स्थानाभावाद्बहिर्ययौ ॥३०॥ दलस्तम्भनराजर्षि-राह्वयत्सचिवाग्रणीम् । रहस्युवाच हे भ्रातर् ! अवन्तीं गच्छ सम्प्रति ॥३१॥ मानतुङ्गनृपं नत्वा, संदिश तं ततः परम् । यच्छीघ्रं परिणेतुं मे, कनीमागम्यतामिति ॥ ३२ ॥ यथाशक्ति करिष्यामि, शुश्रूषां तव हे प्रभो ! । दासत्वेन सदाभावी, तथा कथय सत्वरम् ॥ ३३ ॥ मार्गः शीघ्रं समुल्लङ्घ्यो, विलम्बः क्वापि नो भवेत् । पश्चात्सत्वरमागच्छ, मानतुङ्गसखः शुभेः ॥ ३४ ॥ राजाज्ञातः स मन्त्रीश, आरुहोहत्तुरङ्गमम् । सम्बलञ्च सहादाय, योधानां युथकं तथा ॥३५॥ भूमिं गिरींश्च पश्यन्स, सरलेन पथा पुरीम् । अवन्तीं कतिभिर्वारै–रागतो व्याधिवर्जितः ॥३६॥ दक्षिणापत्यमात्येन, संश्लिष्टो मानतुङ्गराट् । उपहारं समीक्ष्य च, हृष्टः स भूपुरंदरः ॥३७॥ दलस्तम्भनभूपस्य, सचिवोऽयमिति श्रुतम् । ततः सुन्दरसौधे तम–वासयदिलापतिः ॥३८॥ मन्त्रिणा च कृतो वासो, भुक्तं मिष्टान्नभोजनम् । परिधाय स वासांसि, सायं सदोगृहं गतः ॥ ३९ ॥ एकान्तं च समासाद्य, भूपतये न्यवेदयत् । आगतो तव सान्निध्यं, दलस्तम्भन-

नोदितः ॥ ४० ॥ राजकन्यकयास्माकं, प्रतिज्ञा प्रखरा कृता । वृणुयां मानतुङ्गं चेद–न्यथा पुण्यपावकम् ॥४१॥ तस्मात्त्वं पणपूर्त्यर्थ–मागच्छ कृपया प्रभो ! । एतदेव विचार्य मदा–गमनप्रयोजनम् ॥४२॥ सज्जीभूयाद्य हे स्वामिन् !, कुरु शीघ्रं प्रवासनम् । क्षणैकोऽपि समा तुल्यो, रत्नवत्या हि गण्यते ॥४३॥ वचांसि भूपतिः श्रुण्व–न्नास्ते दत्ते च नोत्तरम् । विचारणा-निमग्नोऽसा–वधो नेत्रे चकार च ॥ ४४ ॥ उवाच सचिवः शीघ्रं, ब्रवीति नो कथं मनाक् । प्रत्युत्तरप्रदाने किं, मूल्यं भवति भूपते ! ॥ ४५ ॥ मानतुङ्गस्तदावक्ति, निषेधो नास्ति मे कदा । स्वीकृतं ते वचः किन्तु, विचारैको हि विद्यते ॥ ४६ ॥ विचारयति भूपालो, गन्तव्यं बहुदूरतः । सन्निधिवासभङ्गेन, योगिनी खिद्यते हृदि ॥ ४७ ॥ परिणेतुं न गच्छेयं, तर्हि रुष्टो भवेन्नृपः । द्वयोर्मनः प्रसादाय, योग्यं किं कार्यमत्र वै ॥४८॥ युगपद् द्वे क्रिये केन, मार्गेण क्रियते मया । व्याघ्रसरितयो-रित्थं, न्यायो हृदि समुत्थितः ॥ ४९ ॥ आगता योगिनी ताव–त्तदोत्थाय स भूपतिः । प्रणतः पादयोस्तस्याः, पश्यति सति मन्त्रिणि ॥ ५० ॥ आसनं सा समादाय, गानमारभते शुभम् । नृपस्य वदनं सम्यक्, प्रेक्षते शोकसंयुतम् ॥ ५१ ॥ योगिन्युवाच भूपालं, कथं शोकाब्धिब्रूडितः ? । अद्य तव प्रफुल्लास्यं, प्रातः शशीव दृश्यते ॥ ५२ ॥ आनयेयं बलादिन्द्रं, तवादेशो भवेद्यदि । मेरुं सूर्यं मृगाङ्कं च, करवाणि वशगाः पुनः ॥ ५३ ॥ राजोवाच स तां तथ्यं, वर्तते शृंगिपत्तनम् । दलस्तम्भनराट् तत्र, रत्नावती च तत्कनी ॥ ५४ ॥ कृतसंधा मदर्थं सा, प्रधान आगतस्ततः । सत्येवं किं मया कार्य–मिति चिन्ता तरङ्गितः ॥ ५५ ॥ प्ररुष्टा सा तदोवाच, नृप ! किं त्वं ब्रवीत्यदः । स्मर दत्तवचः पूर्वम्, विस्मृतं तावता किमु ॥५६॥ यद्यासीत्तदवद्यं चेत्, विसृष्टाऽहं न किं त्वया । वचोभ्रष्टा नरास्ते तु, वानरा एव भूतले ॥५७॥ निश्चयेन पुरा ह्यत्र, वास

आसीन्मया कृतः । किन्तु कूटं तत्र ज्ञातं, प्रतीतिरुत्थिता ततः ॥ ५८ ॥ धिग्धिग्तवावतारं च, कथं त्वामसृजत् विधिः । त्वत्तोऽहं श्रेष्ठतायुक्ता, यन्निवसामि सन्निधिम् ॥ ५९ ॥ मयाऽपि गम्यतेऽन्यत्र, स्मर्तव्यं योगिभिः किमु । गृहैके पिहिते तेषाम्–नेकान्युद्घटन्ति हि ॥६०॥ देयं किन्ते मया राजन् !, यदि स्याद्वद सत्वरम् । अद्यारियोगिनः केषां, कदापि सुहृदो न हि ॥६१॥ शासनं कुरु नित्यं त्वं, कार्यं मम त्वयाद्य किम् ? । इत्यादि योगिनीवाचं, नृपोऽश्रुणोन्नताननः ॥६२॥ तत्क्षणं योगिनीपादौ, प्रणम्याद्य स भूपतिः । प्रसादयितु कामश्चोपायानेकान्समाचरत् ॥ ६३ ॥ अरे सुभगयोगिनि !, तवापरा–ध्ययं जनः । मा कार्षीस्त्वं मयि क्रोधं, क्षमैव युज्यते तव ॥६४॥ सेवाभ्रष्टेऽपि भृत्ये न, वचोभ्रष्टो भवेत्प्रभुः । अपकृत्युपकर्ता स, मणिः काचो भवेत्परः ॥ ६५ ॥ दंदह्यमानोऽपि सुगन्धदायी, कृष्णागुरुर्निर्मलकीर्तियाची । कोशश्च वाःपातकदर्थितोऽपि, वार्यमृतं निर्मलमाददाति ॥ ६६ ॥ संघृष्यते काश्मिरजं यथाहि, सौरभ्यभावं च तथा दधाति । प्रज्वाल्यते हेम तथैव याति, सुरम्यभावं जनतोपकारि ॥ ६७ ॥ यन्त्रे यथेक्षुर्भजते हि पीडां, तथा तथा स्वादुरसं ददाति । तथा महादोषयुते स्वदासे, कदापि साधुर्विमना भवेन्न ॥ ६८ ॥

उक्तश्च सूक्तमुक्तावल्यां—

सन्तापितोऽपि साधुः, शुभस्वभावं विशेषतो भजति ।
क्वथितं किं न क्षीरं, मधुररसमनोहरं भवति ? ॥ १ ॥

सुजनो न याति विकृतिं, परहितनिरतो विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः, सुरभयति मुखं कुठारस्य ॥ २ ॥
दुर्जनजनसंतप्तो यः, साधुः साधुरेव स विशेषात् ।
अपि पावकसंतप्तः, खण्डः स्याच्छार्करो मधुरः ॥ ३ ॥
हिताय नाहिताय स्यात्, महान् सन्तापितोऽपि हि ।
पश्य रोगापहाराय, भवेदुष्णीकृतं पयः ॥ ४ ॥
दुर्जनवचनाङ्गारै–र्दग्धोऽपि न विप्रियं वदत्यार्यः ।
न हि दह्यमानोऽप्यगुरुः, स्वभावगन्धं परित्यजति ॥ ५ ॥
पिशुनजनदूषिता अपि, न तु सन्तः सत्यमेव सद्वाचः ।
अपि बर्बरचरणहतः, खर्जूरो मिष्ट एव स्यात् ॥ ६ ॥
सहते कटुं न जल्पति, लाति न दोषान् गुणान् प्रकाशयति ।
रुष्यति न रोषवत्स्वपि, दाक्षिण्यमहोदधिः सुजनः ॥ ७ ॥

आक्रोशितोऽपि सुजनो न वदत्यवाच्यं, निष्पीडितोऽपि रसमुद्गिरते यथेक्षुः ।
नीचो जनो गुणशतैरपि सेव्यमानो, हास्येन तद्वदति यत्कलहेऽप्यवाच्यम् ॥ ८ ॥

कृताञ्जलिर्नृपोऽवादीत्, योगिनि ! प्राणजीविनि ! । वीणामुत्तारय स्कन्धात्, रोपश्च क्रियते कथम् ? ॥ ६९ ॥ लज्जां दृक्संगमस्यापि, दधासि किं न चेतसि ? । जानामि स्म वियोगेन, कदा छेदो न दीयते ॥७०॥ हृदयसद्मनि स्थित्वा, हरन्त्याश्च मनो मम । क्व स्थितं योगिनी त्वं ते, तत्पापान्मोचनं कथम् ? ॥७१॥ अपि बहुकृतोपायैः, कर्णगृहीतहस्तिवत् । त्वया न स्थीयते तर्हि, तस्मिन्किं मे बलं भवेत् ? ॥७२॥ त्वदीयोऽहमिति ज्ञातम्, किन्तु त्वं दूरस्थायिनी । जानेहमद्य योगीशाः, कदा केषां भवन्ति न ॥७३॥ विदेशीयमनुष्येषु, प्रीतिरेव महाक्षतिः । निभवितुं समर्था न, डयन्ते विहगा यथा ॥७४॥ अनुभूतं मयाद्य तत्, भवत्यत्र निदर्शनम् । जानीयां पूर्वमेवाहं, स्निह्यां कदापि नो त्वयि ॥ ७५ ॥ अधुना शोचनीयं किं, स्यादेव भवितव्यता । क्षौरकर्मणि संजाते, ज्ञाते वारतिथी वृथा ॥७६॥ त्वं यया जिह्वयाऽवादी–र्यद् वसाम्यत्र सर्वदा । तयैव प्रोच्यते गन्तुं, कथं ते नीतिरीदृशी ? ॥७७॥ प्रपाल्य स्नेहस्वर्वृक्ष–मुच्छिद्यते कथं त्वया ? । करुणा वारिणा सिञ्चेः, पूरय मे मनोरथम् ॥७८॥ क्षणार्द्धमपि मे वर्षं, जायेत ते वियोगतः । वल्लीविश्लेषतो द्राक्षा, तथाऽहं कृशतां गमी ॥ ७९ ॥ कोमले ते तनूवाचौ, चेतस्तु वज्रनिर्मितम् । यत्राकृतिर्गुणास्तत्र, मिथ्येति वचनं त्वयि ॥ ८० ॥ मनोमुत्कलता मोच्या, मनोहारिणि ! मन्यताम् । संजीविनि ! तवाभावे, कस्य प्रेक्ष्यं मुखं मया ? ॥ ८१ ॥ पूर्वं मया सह प्रीति–रनर्गला कृता त्वया । निक्षिप्य विरहाग्नौ मा–मधुना गम्यते कथम् ? ॥८२॥ अवर्णवादं च दत्वा मां, निरपराधमानुपम् । श्मश्रुसपन्दनयेन त्वं, मम सामिप्यमुज्झसि ॥८३॥

परिणेतुं तवादेशा-द्रमिष्याम्यन्यथा न हि । वद त्वं करणीयं मे, पालयामि भवद्वचः ॥८४॥ विलापं तस्य च ज्ञात्वा, योगि-न्युवाच भारतीम् । मा शुचस्त्वां परीक्षितुं, विलासो हि ममैषकः ॥ ८५ ॥ धन्यौ ते पितरौ त्वं च, यथेच्छं गम्यतां त्वया । दलस्तम्भनकन्यायाः, करग्रहं मुदा कुरु ॥ ८६ ॥ यदीच्छामि त्वया साक-मागच्छामि सतन्त्रिका । त्वयि गते न तिष्ठेयं, यत्र त्वं तत्र मे गतिः ॥ ८७ ॥ शयालुः सुन्दरां शय्यां, प्राप्य हृष्टो भवेद्यथा । श्रान्तो ना वाहनेनैव, क्षुधितोऽन्नसमा-गमात् ॥ ८८ ॥ तथैव स्वामिनिवाक्यात्, राजाऽभूद्दर्पनिर्भरः । योगिनीहृदयं ज्ञात्वाऽऽह्वयद् दक्षिणमन्त्रिणम् ॥ ८९ ॥ युग्मम् ॥ सोऽप्यागत्य नृपं प्रोचे, विलम्बं कुरुषे कथम् ? । दूरः पन्था अतः शीघ्रं, गन्तव्यं यदि ते दया ॥९०॥ प्रतीक्षते स भूपालः, सत्वरं सज्जतां भज । धर्मकर्मगतिः शास्त्रे, त्वरिता कथिता ह्यतः ॥ ९१ ॥ नृपोऽपि वचनात्तस्य, चतुरङ्गबलान्वितः । दुन्दुभि-नादसम्पूर्ण-दिग्भागः स्म प्रतिष्ठते ॥ ९२ ॥ योगिनी निजवीणान्तः, श्रेष्ठान्याभूषणान्यधात् । यानि नृपो न जानीया-त्तथैव रक्षति सदा ॥ ९३ ॥ प्रतस्थे दक्षिणामाशां, सचिवाग्रेसरो नृपः । योगिनीं रथमारोप्य, स्वान्तिकं रक्षिता तथा ॥९४॥ उवाह सबलं मार्गे, बलं तस्य महीपतेः । यथा पयोधरो नूत्नो, वा सकल्लोलवारिधिः ॥९५॥ एकैकोपरि गच्छन्तो, हेषन्ते स्म तदा हयाः । मदस्राविगजास्तत्र, शुण्डादण्डविशोभिताः ॥९६॥ रथिनोऽधिज्यधन्वानः, कर्णसमपराक्रमाः । वर्मशिञ्जितगात्रा-श्चाऽनुजग्मुः प्रौढपत्तयः ॥ ९७ ॥ प्रतिक्षणं स योगिन्याः, स्मरणेनान्तिकं ययौ । जातु तद्द्वयमेकत्र, स्थित्वा गीतामृतं पपौ ॥ ९८ ॥ गच्छन्पञ्चमवारे स, सौन्दर्यजितनन्दनम् । पर्णपुष्पफलापूर्णा-भ्रंलिहशुभवृक्षकम् ॥ ९९ ॥ घनच्छायापराभूतः, सूर्यांशुभिर्विवर्जितम् । द्रुमगुच्छसीदन्केकि-केकापूर्णककुबाणम् ॥ १०० ॥ सवनाब्जसरःशोभा, मनोहार्यन्तरालकम् ।

अरण्यमासवानेकं, तस्थौ चापृच्छ्य योगिनीम् ॥ १०१ ॥ तथाध्वखेदखिन्नानि, तस्थुः सेनाङ्गकान्यपि । तत्क्षिप्तसन्निवेशैश्च, धववद्रङ्गमित्यभूत् ॥ १०२ ॥ निधाय योगिनी चेत्थं, वञ्चनीयोऽत्र भूपतिः । विलम्बो दुःखदो भावी, कृत्वेति सा समुत्थिता ॥ १०३ ॥ वीणामप्यगृहीत्स्कन्धे, चचाल नृपतिं प्रति । गत्वा च तमुवाचेत्थ–मवन्तीनाथ ! त्वं शृणु ॥१०४॥ स्नानायाहं दधे चेतः, प्रत्यागंत्री क्षणेन च । मुनेराचारकार्याय, सानुलोममिदं वनम् ॥ १०५ ॥ प्रतिवक्ति स भूपालो, गहनं गहनं खलु । व्याघ्रसिंहाश्च गर्जन्ति, स्त्रीत्वाच्चं भेष्यसि क्वचित् ॥ १०६ ॥ यदीच्छसि त्वया साक–मागच्छामि धनुर्धरः । के सिंहीरक्षणाय स्यु–रित्युक्त्वा सा गता ततः ॥ १०७ ॥ रमणीयाः सरस्तटयो, गभीरा घनवारिभिः । मत्स्यपुच्छकशाघातै–र्नुदन्त्यश्चतरङ्गकान् ॥१०८॥ हंसबकचकोरालि–र्यत्र क्रीडन्ति निर्भयम् । खगाः केचिड्डयन्ते च, कूजन्त्येके मनोहरम् ॥१०९॥ जम्बूजम्बीरचूताश्च, कदम्बदाडिमा अपि । पत्रपुष्पफलग्राम–कारितक्ष्मानमस्क्रियाः ॥ ११० ॥ तादृशस्थानमागत्य, योगिनी फुल्लमानसा । स्कन्धाद्वीणामुत्तार्य, वृक्षस्य कोटरे न्यधात् ॥ १११ ॥ पश्चात्सरोगता स्नातुं, मग्ना घनजलेऽभया । स्नात्वोपकण्ठमागत्य, मार्जयति स्म मूर्धजान् ॥ ११२ ॥ वीणागर्भात्समाकृष्य, रम्यपीताम्बरं दधौ । वनदेवीव साक्षात्सा, जाता सुरमनोहरा ॥ ११३ ॥ मनोभूशरसदृक्षं, नेत्रयोरञ्जनं कृतम् । ललाटकुङ्कुमार्चा तु, बालातप इवाऽभवत् ॥ ११४ ॥ प्रत्यङ्गं भूषणाशोभि, पादौ नूपुरशिञ्जितौ । अप्सरो रूपमाधाया–रोहच्छाखां वटस्य च ॥११५॥ मधुरालापतस्तत्र, गायति स्म यथोचितम् । प्रहरो व्यत्यगादेवं, विचिन्तयति भूपतिः ॥ ११६ ॥ मार्गभ्रान्तिव्यथातः सा, नागताद्यावधि किमु । किंवा हिंस्रपशोर्भक्ष्यं, जाता वा ब्रूडिता जले ॥११७॥ वञ्चित्वा वा गता किं मां?, विलम्बश्चाभवत्पुनः । मृगये तामहं गत्वा, यत्र

कुत्राऽपि चेद्भवेत् ॥ ११८ ॥ इति विचार्य भूपालः, प्रस्थितो निःसहायकः । स्फुरद्दक्षिणगात्रेण, कथञ्चिद्धीरतां गतः ॥११९॥ गत्वा पश्यति वल्लीनां, गृहाणि तीक्ष्णदृष्टिभिः । गुप्तस्थानानि चान्यानि, मुहुर्विलोकयत्यसौ ॥१२०॥ मदोन्मत्तो हि मातङ्गो, यथा भ्रमति कानने । यूथभ्रष्टकुरङ्गश्च, तथाऽसौ शोभतेऽधुना ॥ १२१ ॥ पद्धतीमीक्षमाणोऽपि, लेभे न योगिनीं क्वचित् । तया तु प्रेक्ष्य राजानं, वञ्चनायै विचारितम् ॥१२२॥ निजसान्निध्यमाक्रष्टु-मारेभे मिष्टगायनम् । निषण्णा चूतशाखायां, कोकिला गायति यथा ॥ १२३ ॥ पूत्कारयां बभूवोच्चै-र्विदेशिन्नेहि मां प्रति । दोलासुखमवाप्य त्वं, गच्छेः पश्चाद्यथा-सुखम् ॥ १२४ ॥ मत्पथं न व्यतीयाश्च, प्रिय ! सङ्गच्छतां मया । एकाकी च कथं गन्ता, विह्वल इव काननम् ॥१२५॥ विचिन्तयति भूपोऽपि, का समाह्वयतीति माम् । योगिन्या नास्ति नादोऽयम-ज्ञातः खलु ज्ञायते ॥१२६॥ सोऽप्यनुसृत्य तां वाणी-मागतो दृष्टवान्स्त्रियम् । नारी सुराङ्गना वेयमि-ति मुहुरचिन्तयत् ॥ १२७ ॥ मुग्धीभूय नृपस्तस्या-मान्दोलयति तां स्वयम् । तत्कटाक्षशराविद्ध-गात्रग्राम उवाच ताम् ॥१२८॥ कुतः समागता मुग्धे !, निवासो विद्यते क्व च ? । कथमेका-किनी दावे, किंवा नाथेन तर्जिता ? ॥१२९॥ बाल्येऽपि न बिभेति किं ?, सत्यं मां वद मानिनि ! । नृपस्येति वचः श्रुत्वा, साललाप मनोहरम् ॥ १३० ॥ कृताऽज्ञानतया बाल्ये, संधा च दुर्लभा मया । पूरयेद्यदि तां कोऽपि, स मे भर्त्ता भवि-ष्यति ॥ १३१ ॥ यदङ्घ्रिक्षालनं पात्वा, कर्तव्यः स्वामिसङ्गमः । नाथनं वृषभस्येव, कृत्वा वाह्य इतस्ततः ॥ १३२ ॥ तादृशस्वामिनोऽभावा-दन्यस्य च निषेधतः । क्रुद्धखचरपित्राऽहं, निर्वासिता स्वदेशतः ॥ १३३ ॥ दिनचतुष्टयं जात-मिव युगचतुष्टयम् । किन्तु विना प्रतिज्ञायाः, पूर्त्या पाणिग्रहः कथम् ? ॥ १३४ ॥ निरीक्ष्य रमणीं राजा, स्वभानं व्यस्मरत्तदा ।

यथाऽऽम्रिपल्लवं प्रेक्ष्य, प्रोल्लसन्ति मीनादयः ॥ १३५ ॥ नृपो विचारयामास, परिणयेयमेतकाम् । दुष्टानां विस्मयार्थं च, सफलत्वाय जन्मनः ॥ १३६ ॥ बभाषे मुग्धभूपालो, हे साक्षान्मन्मथप्रिये ! । परिणयेर्यदि त्वं मां, तत्पूरयामि ते वचः ॥ १३७ ॥ सोवाचापेक्ष इत्येवं, को विलम्बो यदीच्छसि ? । भर्तुः सम्मेलनार्थं तु, सज्जैवाऽस्मि हि पूर्वतः ॥ १३८ ॥ यथान्धो नेत्रयोरर्थी, पङ्गूश्च पादयोर्द्वयोः । तद्वत्पत्यावपेक्षा मे, कामश्च खलु दुस्त्यजः ॥ १३९ ॥

उक्तश्च सूक्तमुक्तावल्यां—

**आहारो द्विगुणः स्त्रीणां, निद्रा तासां चतुर्गुणा । षड्गुणो व्यवसायश्च, कामश्चाष्टगुणः स्मृतः ॥१॥**

विस्मृत्य योगिनीं भूप, एतस्यां विकलोऽभवत् । पतितो दम्भपाशे स, बहिर्गन्तुं शशाक न ॥ १४० ॥ आतुरः परिणेतुं स, भूपतिर्दाम्भमध्यगः । तयोक्तं जलमानीय, गृहाण चरणोदकम् ॥ १४१ ॥ कपटागारकामिन्याः, कौतुकं दृश्यतां समम् । यत्पारपूर्तिमानेतुं, ब्रह्मादयो न शक्नुयुः ॥ १४२ ॥ प्रधावितो जलार्थं स, प्रविवेश सरोवरम् । नलिनीपत्रसम्पुटे, गृहीतं निर्मलं जलम् ॥ १४३ ॥ आगत्य खचरीं प्रोचे, प्रणामाञ्जलिमादधत् । पादौ समर्पय त्वं यत्, क्षालयामि यथोचितम् ॥ १४४ ॥ नारी पादौ ददाति स्म, क्षालनार्थं समादिशत् । नृपेणाऽपि तथा कृत्वा, सप्ताचमनमापपौ ॥ १४५ ॥ पश्चात्खचरी राजानं, कण्ठे कृत्वा च वस्त्रकम् । वृषभसदृशं चक्रेऽ–भ्रामयच्च सरस्तटे ॥ १४६ ॥ कशामादाय सा यत्र, दधाति स्म स्वपादुके । संस्थाप्य स्वकरद्वन्द्वं, तत्रानुगच्छति स्म सः ॥१४७॥ पश्चात्तरुमधो गत्वा, तया सह नृपोत्तमः ।

वृक्षाणां प्रतिभूत्वेन, प्रारेभे लाग्नमुत्सवम् ॥ १४८ ॥ रेणुराशींश्च निर्माय, चतुः कलशच्छद्मना । इत्थं प्रतारितो राजा, परिणीतस्तया सह ॥ १४९ ॥ चेष्टां विलुम्पति विनाशयति स्वधर्मम्, पापं च यो दिशति कामिनीसङ्गजन्यम् । कीर्तिं विलेपयति कज्जलदुर्यशोभिः, धिङ्मोहराजसुभटं तमनङ्गदेवम् ! ॥ १५० ॥ प्रहर्षति स्म सा चित्ते, नाथस्याहो मनीषिता । इत्थं प्रतारितश्चापि, स जानाति मनाग्न हि ॥१५१॥ राज्ञोक्तं तव हास्यस्य, कारणं किमु तद्वद । सोवाच तुल्य-भर्तैव, प्रफुल्लयति मे मनः ॥१५२॥ गता कृतार्थतामद्य, सन्धाऽपि पूर्णतामिता । भाग्यं मे प्रौढताप्राप्तम-शर्मागच्छदन्त-ताम् ॥ १५३ ॥ लाग्नमहे गते पूर्तिं, करे धृत्वा नृपो जगौ । गच्छावः सन्निवेशे हि, सर्वोऽपि मां प्रतीक्षते ॥ १५४ ॥ जगाद खचरी क्ष्माप-मागच्छन्तीं त्वया सह । ह्रीर्बाधतेऽधिकं मां, तद् गच्छ यामि तवानुगा ॥ १५५ ॥ कामिनीवचनं श्रुत्वा, सन्निवेशमगान्नृपः । आगमं प्रेक्षमाणश्च, यावदत्र स्थितस्तदा ॥ १५६ ॥ खचरीरूपमुत्सृज्य, पुनर्भूत्वा च योगिनी । वीणां हस्ते समादाय, नृपान्तिकमुपागता ॥ १५७ ॥ सिंहासने नृपेणैषा, स्थापिता देवता समा । तोषिताऽन्नपानेन, तुष्टः स गीतपानतः ॥१५८॥ नृपतिश्चिन्तयत्येवं, क्व गताद्यापि खेचरी ? । अथवा वनदेवी मां, विप्रतार्य गता क्वचित् ॥ १५९ ॥ विप्रतारि कया वा किं, कयाचिद्वञ्चितः किमु । कवलो मुखमागत्य, गतः शोकेन तत्सृतम् ॥ १६० ॥ जानीयाद्यदि योगिनीं, निःस्नेहा तद्भविष्यति । पूर्णाभावे वरं न्यून-मित्याद्यामहं प्रथाम् ॥ १६१ ॥

॥ इति मानवतीचरित्रे मानतुङ्गराजप्रतारणनामा पञ्चमः सर्गः ॥

---

# षष्ठः सर्गः ।



खचरी भूपतेश्चित्ते, शल्यमेवाऽभवत्खलु । इन्द्रजालप्रयोगं वै, तद्वार्तां मन्यते हृदि ॥ १ ॥ किन्तु स्वप्रवृत्तिं न, कस्मा अपि वदत्यसौ । योगिन्यपि यथाऽज्ञाना, तथा तस्य स्थितान्तिकम् ॥ २ ॥ सन्निवेशं समुत्पाट्य, ततः सञ्चलितो नृपः । मुंगिपत्तनसम्प्राप्तो, योगिन्या जगदे ह्यदः ॥३॥ योगिन्यहं तु भोगी त्व-मावां गच्छेव चेत्सह । टीकां पौराः करिष्यन्ति, त्वमेकाकी व्रजेरतः ॥ ४ ॥ वसाम्यत्राहमुद्याने, नगरे गम्यतां त्वया । यो रक्षति जनाचारं, त्वमेव योगिनं विदुः ॥ ५ ॥ रत्नवतीं समुद्वाह्य, शीघ्रमागच्छ कानने । पुनस्त्वया सहावन्ती-मागच्छामीति निश्चितम् ॥ ६ ॥ त्यक्त्वा योगिनीमुद्याने, नृपोऽगच्छत्पुरीं प्रति । दलस्तम्भनराजाऽपि, सांमत्यं संचकार च ॥ ७ ॥ मानतुङ्गो मुदा विष्टः, प्रासादोत्तारके निजे । अन्नपानादिना तत्र, सेवा तस्याऽभवत्तदा ॥ ८ ॥ सुमुहूर्ते तदुद्वाहे, गृहीतं शान्तिकारकम् । दलस्तम्भनकन्यायाः, सम्पूर्णा हि मनोरथाः ॥ ९ ॥ रत्नवतीति जानीते, सफलं भावि जन्म मे । यन्मम परिणेताऽभूत्, महौजा मालवेश्वरः ॥१०॥ योगिन्युपवनावासा, स्ववेषमुदतारयत् । दिव्याभूषणवस्त्राणि, प्रत्यङ्गं सा मुदा दधे ॥ ११ ॥ गता रत्नवतीवासं, विस्मापितो जनोऽखिलः । रत्नवत्येति पृष्टा यत्, किन्नाम कुत आगता ? ॥ १२ ॥ तयोक्तं यदहं देवी, मानतुङ्गस्य भूपतेः । अवन्तीतः समायाता, नाम्ना मानवती ननु ॥ १३ ॥ जिज्ञासुना नृपेणाऽहं, त्वां द्रष्टुं प्रेपिता किल । आगताऽतस्तवावासं, रूपेण तोषितं मनः ॥१४॥

स्वरूपेणानुरूपां तां, दृष्ट्वा रत्नवती तदा । सहसा मातरं गत्वा, तदीयागमनं जगौ ॥ १५ ॥ किञ्च स्वरूपवृत्तान्त-मुक्त्वा
वदति तां प्रति । द्रष्टुं वाञ्छसि चेदम्ब !, तत्प्रियामाह्वयामि किम् ? ॥१६॥ सोवाचाऽऽह्वयतां शीघ्रं, विलम्बो जायतान्न हि ।
कुमार्यपि जवेनैव, प्रविवेश तया सह ॥ १७ ॥ दृष्ट्वा तां महिषी सापि, प्राहर्षत्सपरिच्छदा । प्रत्यहं भिन्नवेषा सा-ऽऽगच्छन्मा-
नवती ततः ॥ १८ ॥ दलस्तम्भनराजाऽपि, लग्ने तुर्याण्यवादयत् । शुशुभे मण्डपाकारो, महानभून्महोत्सवः ॥ १९ ॥
अंशुकाभूषणैः कन्या, शृङ्गारिता सखीगणैः । वनिता गानसम्पूर्णा, अखिलाशास्तदाऽभवन् ॥ २० ॥ स्त्रीवृन्दे मानवत्यपि,
मधुरं गायति स्म च । न तां स्त्रीम् कोऽपि जानाति, सर्वत्राप्तशुभादराम् ॥२१॥ मानतुङ्गोऽपि सज्जोऽभूत्, शुद्धनेपथ्यमादधत् ।
नानावादित्रनादेन, सहितो मण्डपं गतः ॥ २२ ॥ वरकन्ये स्थिते मन्त्र, उच्चारिते पुरोधसा । जाते चतुःप्रदक्षिणे, समाप्ति-
मगमद्विधिः ॥ २३ ॥ मानतुङ्गस्ततः स्वीयं, सन्निवेशमगान्मुदा । विवाहकार्यमापूर्य, सशान्ति तत्र संस्थितः ॥ २४ ॥
इतश्च रजनीकाले, महिष्योचे स्वपुत्रिका । त्वयाद्य स्वपतेः पार्श्वं, गन्तव्यं रीतिरीदृशी ॥ २५ ॥ मानवती तदोवाच,
कपटयुक्तेन चेतसा । सरले ! शृणु मे वाणीं, पश्चात्प्रेषय कन्यकाम् ॥ २६ ॥ अस्माकं कुलदेव्यस्ति, तां यदा नंस्यति नृपः ।
सस्त्रीको रंस्यते तदा, कुलरीतिस्तथाहि नः ॥२७॥ विचरन्त्या सहानेन, ज्ञातं मया हि तत्खलु । असत्यं न वदामि तत्, पृच्छामि
तं यदीच्छसि ॥ २८ ॥ राज्ञी मानवतीं प्रोचे, गत्वा च पृच्छ भूपतिम् । यत्त्वादिशति तत्सर्वं, ज्ञापय मां यथोदितम् ॥२९॥
भूषणालङ्कृतस्वाङ्गा, मानवती तदोत्थिता । लप्सिकास्थालमादाय, प्रस्थिता सा नृपं प्रति ॥ ३० ॥ रमझमेति कुर्वन्ती, सोप-
राजं समागता । पतिर्वेत्ति न केति ताम-हो दम्भविजृम्भणम् ॥ ३१ ॥ प्रणिपत्य स्थिता तत्र, स्थालो मुक्तो हि सन्निधौ ।

दृष्ट्वा तां मानतुङ्गश्च, मधुरमालपन्मुदा ॥३२॥ वद कामिनि ! काऽसि त्वं ? रात्रावागमनं कथम् ?। कथं च लप्सिकास्थालः, केयम् वार्ता निगद्यताम् ॥ ३३ ॥ तदा मानवती प्रोचे, कृत्वावगुंठनं पुनः । रत्नवतीगुरोः पत्नी, मानवतीति ख्यातिभाक् ॥ ३४ ॥ शृणु स्थालविवेकं यत्, योऽस्मद्भूपालपुत्रिकाम् । परिणयेत्स भक्षयेत्, मदुच्छिष्टां हि लप्सिकाम् ॥ ३५ ॥ अतस्त्वं भक्षयैनां, यद्भवेदाचाररक्षणम् । नो चेद्वरवधूमध्ये, विघ्नं किञ्चित्प्रजायते ॥ ३६ ॥ यदि राज्यसुखस्येच्छा, तर्हि भक्षय प्रीतितः । भामिन्या वञ्चितः स्वामी, खलु स्त्री कपटावृता ॥३७॥ ज्ञातं नृपेण नारीयं, सत्यं वदत्यसंशयम् । अत्रत्या रीतिरीदृशी, प्रतिक्रिया हि तत्र का ? ॥३८॥ ततोऽवादीन्नृपो यत्त्वं, प्राग्भुक्त्वा देहि मां पुनः । भक्षयेयमहं येन, नाचारोल्लङ्घनं भवेत् ॥ ३९ ॥ तया भुक्तोज्झिता दत्ता, भूपतिनाऽपि भक्षिता । वराकः किं नृपः कुर्यात्, वञ्चयित्र्यां निजस्त्रियाम् ॥४०॥ जलेनाचमनं कृत्वा, पश्चान्नृप उवाच ताम् । विध्यनन्तरं यदि स्याच्चेत्, कथय पारयामि ते ॥४१॥ किञ्च रत्नवती सात्र, कथय नागता कथम् ? । सा प्रोचे सा तु षण्मासीं, न ते सन्निधिमाप्नुयात् ॥४२॥ गोत्रजाऽर्चाऽवशेषाऽस्ति, षण्मासीं सा भविष्यति । अत्रैव स्थापयिष्यति, त्वद्गमनं निषेत्स्यति ॥४३॥ कथनीयं न कस्मैचित्, वृत्तान्तं गुप्तमेव तत् । आलापाय त्वया साक–मागमिष्यामि सर्वदा ॥ ४४ ॥ प्रतार्येत्थं नृपालं सा, राज्ञी सामीप्यमागता । ज्ञापयति व्रतायासौ, षण्मासीं स्थास्यति नृपः ॥ ४५ ॥ तत उज्जयिनीं गत्वा, गोत्रदेवीं प्रसाद्य च । संगमिष्यति बालाया, इदं गोप्यं हि सर्वतः ॥ ४६ ॥ शीघ्रं कालो गमिष्यति, भविष्यति सुखावहम् । इति विचार्य सा देवी, तस्या विश्वासतः स्थिता ॥ ४७ ॥ द्वितीयमध्यरात्रौ सा, नृपस्यान्तिकमागता । विज्ञाय च नृपेणाऽपि, बहुमानेन सादृता ॥ ४८ ॥ असंशयं कटाक्षैः सा, तदीयं पश्यति मुखम् ।

राजाऽपि तत्स्वरूपेण, मानं मुमोच सर्वथा ॥ ४९॥ यथा यथा गतो मूर्च्छां, विकारं प्राप्तवान्यथा । तथा तथाऽदर्शयत् सा, हावभावादिकं बहु ॥ ५० ॥ जानाति न नृपस्तस्या, वञ्चनायुक्तिमीदृशीम् । वा कामासक्तचित्तानां, नश्यति ज्ञानलोचनम् ॥ ५१ ॥ नृपो मानवतीं वक्ति, दृष्ट्वा त्वां रञ्जितः खलु । त्वमपि कृपया पश्य, सस्नेहं मां प्रति वद ॥ ५२ ॥ तच्छ्रुत्वा मानवत्योक्तं, कथमेवं त्वयोच्यते । मत्तोऽप्यधिकरूपिणी, वर्तते तव सुन्दरी ॥ ५३ ॥ रत्नवत्या तवाशा किं, पूर्यते न हि हे नृप ! । यन्मामर्थयसे चेत्थं, धिग्धिङ्मदनलालसाम् ! ॥ ५४ ॥ यत्र साहाय्यकं योग्यं, तत्र धाटिं प्रकुर्वता । वञ्चनं नृप ! विसृज्य, स्थेयं परावनौ त्वया ॥५५॥ स्वकीया सुन्दरी या स्यात्, सैवं वाच्याऽपरा न हि । इत्यादि कटु कर्णयन्, नाकरोन्नेत्रवारणम् ॥ ५६ ॥ अतिकामातुरो जातो, याचते तां मुहुर्मुहुः । तदा मानवती भूपं, सहर्षमित्यवोचत ॥ ५७ ॥ अहो त्वमाकुलः कथं ?, भवसि हे नृपोत्तम ! । दास्यहमस्मि ते त्यक्त्वा, गमिष्यामि न कुत्रचित् ॥ ५८ ॥ वनितावचनं श्रुत्वा, राजाहर्षमवाप च । सोत्कण्ठं विषयाभोग-सुखं भुक्तं तया सह ॥५९॥ इत्थमनुदिनं भोगं, भुञ्जानयोस्तयोः क्रमात् । मानवती दधौ गर्भं, पूर्वपुण्यप्रसादतः ॥ ६० ॥ मानवत्येकदा प्रोचे, प्राणाधार ! वचः शृणु । गर्भोऽभवत्त्वया मयि, तदुपायो विचार्यताम् ॥ ६१ ॥ प्रसूतिर्मे भवेद्यदा, तदावन्तीं गमिष्यसि । स्थित्वाऽत्राऽहं कथं पुत्रं, पालयिष्यामि भूपते ! ॥ ६२ ॥ किञ्च लोकापवादश्च, कथं सह्यो भवेन्मया । भावि तु भूतमेवातः, चिह्नं मे किञ्चिदर्पय ॥ ६३ ॥ यथा त्वमंगजं जाने, यदा गच्छेत्तवान्तिकम् । तस्मात्तत्प्रार्थये चिह्न-मन्यन्नास्ति प्रयोजनम् ॥ ६४ ॥ तद्राणीयोग्यतां ज्ञात्वा, चिह्नं तस्यै समर्पितम् । निजनामाङ्किताङ्गुलि, मुक्ताफलाढ्यमालिके ॥ ६५ ॥ सुस्नङ्मुद्रेकरे कृत्वा, मानवत्युत्थिता

गदा । प्रणम्योवाच भूपाल-मेमि रत्नवतीं प्रति ॥६६॥ नृपो न छद्म जानाति, न्यसृजत्तां च तत्क्षणम् । आगत्य सा बहिर्गृहा-न्मध्यउपवनं गता ॥६७॥ वेषं संगोप्य वीणायां, योगिनी साऽभवत्पुनः । चिन्तयति मनस्येवं, वचनं पालितं मया ॥६८॥ गन्धाम्बुअपर्ना पूर्वं, नास्त्यत्र वासतः फलम् । पितरौ मे प्रतीक्षेते, मच्चिन्ताग्निदह्यत्तनू ॥६९॥ कार्यसिद्धौ न विलम्बेत, बुध इति निवार्य सा । वीणामादाय शर्वर्यां, प्रस्थितैकाकिनी ततः ॥ ७० ॥ सा क्रमेणागता तस्मिन्, वने यस्य सरस्तटे । पतिर्गुणभृतां नीतः, पायितं पादक्षालनम् ॥ ७१ ॥ ततः कतिदिनैरागात्, मालवेष्वकुतो भया । वासरैः कतिभिः पुर्या-मागत्य प्रविवेश सा ॥ ७२ ॥ पितृभ्यां मिलिता मुसं, निनाय तौ प्रहर्षताम् । साऽपि हर्षाश्रुपूर्णाक्षी, तथा गद्गदवागभूत् ॥ ७३ ॥ विरहिणाछभौ दैवा-न्मिलेताम् चेत्कचित्पुनः । ज्ञानी तौ च तयोः शातं, जानीयुस्ते त्रयस्तदा ॥ ७४ ॥ पितृभ्यां गदितं पत्यु-र्वचनं च यथातथम् । पुत्रीप्रयुक्तितः सर्वे, सञ्जाता हर्षनिर्भराः ॥ ७५ ॥ सन्त्यज्य योगिनीवेषं, पूर्वं परिदधे हि सा । सहर्षं स विशेषाणि, भोजनानि ततोऽकरोत् ॥ ७६ ॥ रात्रौ सुरङ्गया सा च, गतैकस्तम्भसद्मनि । आकार्य यामिकं रात्रौ, वार्तालापं चकार च ॥ ७७ ॥ जगाद प्राहरिकस्ता-मियद्दिनानि किं त्वया । अहं नोत्थापितः कदा, प्रसुप्तासी-रियरिकमु ॥ ७८ ॥ धृतं मौनव्रतं तावत्, आहूतः पूर्त्यनन्तरम् । यामिकमपि विश्वास्य, स्थिता धर्मपरायणा ॥ ७९ ॥ तप आचाम्लमारेभे, सम्यक्त्वपालनं तथा । पतिप्रतारणे जातं, पापमित्थं निरासयत् ॥ ८० ॥ मनोवाक्कायशुद्ध्याऽसौ, प्रतिक्रान्तीकरोति च । स्फुरत्येतादृशी बुद्धि-र्भव्येष्वेव न संशयः ॥ ८१ ॥ मानतुङ्गो गुरुस्त्रिय-महर्निशं प्रतीक्षते । असौ किं न समायाति, गर्भधारणतः परम् ॥ ८२ ॥ मानवत्यत्र यामिकं, स्वगर्भवृत्तमाकरोत् । गत्वान्तःपुरमाचक्ष्व, तदित्यादिष्ट-

मेतया ॥ ८३ ॥ चमत्कारमिताः सर्वे, श्रुत्वा तदुदितं वचः । विना नरप्रवेशेन, गर्भस्य धारणं कथम् ? ॥ ८४ ॥ यथा मीनो जलोत्पन्नः, पार्वती पर्वतोद्भवा । गर्भोत्पत्तिस्तथाऽस्यां किं, मन्तव्याऽस्माभिरीदृशी ॥ ८५ ॥ ग्राहरिकः समुत्पत्य, राजप्रासादमागतः । तदीयगर्भवृत्तान्तं, जगाद महिषीं समम् ॥ ८६ ॥ श्रुत्वा राज्ञीगणो वृत्तं, तालीर्दत्त्वाऽहसन्मिथः । यद्विना नृपतिं गर्भ, एकस्तम्भे कथं भवेत् ? ॥८७॥ द्वेषिण्यः षोडशस्त्रियः, सम्मिल्यैवं व्यचारयन् । पत्रद्वारा पतिः शीघ्रं, ज्ञापनीयो यथातथम् । ॥८८॥ पत्रलेखाय कर्णाभ्यां, महिषी संस्थिता ततः । कुशलादि लिखित्वा सा, तत्त्वार्थं न्यस्यति स्म च ॥८९॥ समाचारान्तरं स्वामिन् !, ज्ञातव्यं सुविचारतः । मोहेन रत्नवत्यास्त्वं, वसस्यद्यापि दक्षिणे ॥ ९० ॥ करोषि गृहशुद्धीर्न, कारयसि तथा न च । भ्रमसि परदेशे च, नाकरोस्तच्छुभंकरम् ॥९१॥ निवर्तेथास्ततः शीघ्रं, मा स्था निश्चितभावतः । अत्र मानवती ते स्त्री, ससत्त्वाभूत्स्वयं यतः ॥ ९२ ॥ सा वर्धापनिका ज्ञेया, मृषावाक्यं न वर्तते । अस्माभिरपि तच्छ्रुत्वा, पर्णसिष्टान्नमर्पितम् ॥ ९३ ॥ यस्यातिशयपुण्यं स्यात्, तस्याङ्गनेदृशी भवेत् । यया विनापि भर्तारं, प्रसवितुं हि शक्यते ॥ ९४ ॥ राजन्देवीपदं तस्यै, दास्यते यदि तद्वरम् । तद्धर्षः स्यात्तदापूर्णः, स्वतुल्यस्थानलाभतः ॥ ९५ ॥ तत्र त्वं मग्नतां प्राप्तः, प्रमदाऽत्र शिशुप्रसूः । इत्थं लाभद्वयप्राप्तौ, गृहस्मृतिः कथं भवेत् ? ॥ ९६ ॥ सीमन्तावसरे शीघ्रं, समागच्छेः कृपानिधे ! । इति विलिख्य दूताय, ततः पत्रं समर्पितम् ॥ ९७ ॥ पत्रं नृपाय दातव्यं, प्रणामान्कथयेर्मुखात् । इत्युक्त्वा प्रेषितो दूतोऽचलत् नार्यश्च हर्षिताः ॥ ९८ ॥ मिथः कुर्वन्ति तद्वार्ताः, स्थित्वा सर्वा अहर्निशम् । परिवाच्य पतिः पत्रं, विरक्तोऽस्यां भविष्यति ॥ ९९ ॥ समर्था छिद्रशुद्ध्यां च, हृदि शल्यमिव स्थिता । यस्या भवेत्सपत्नी सा, जीविताऽपि मृतैव हि ॥१००॥

भार्याद्वितयसंयुक्तो, जनोऽपि पीडितोऽनिशम् । महिष्योर्युधि वृक्षोऽपि, यथाऽनुभवति व्यथाम् ॥ १०१ ॥ नार्यः सदार्थ-
यन्ते यत्, सपत्नी न भवेत्प्रभो ! । स्वसरिति वदत्यपि, वैरिणीव सदा वसेत् ॥ १०२ ॥ मानतुङ्गसमीपं स, प्रेष्यः प्राप
क्रमेण च । प्रणम्य सत्वरं पत्र-मर्पितं राजहस्तके ॥ १०३ ॥ निर्वाच्य ज्ञातवृत्तान्तो, मानवत्यां चमत्कृतः । किं लिखितं
युवत्या तत्, तद्गृहे यन्त्रसप्तकम् ॥ १०४ ॥ पत्रेऽस्मिन्कपटं किञ्चित्, न मान्यं वृत्तमीदृशम् । कयाचिद्द्वेषभावेन, लिखितं
तु मृषैव तत् ॥ १०५ ॥ पिपीलिका प्रवेष्टुं न, शक्यते यत्र सद्मनि । पवनः सर्वसञ्चारी, प्रवेष्टुं न प्रगल्भते ॥ १०६ ॥
वसन्ति तत्र सा नारी, गर्भिणी जायते कथम् ? । विना पुरुषसंगत्या, न श्रुतं गर्भधारणम् ॥ १०७ ॥ तावद्द्वितीयपत्रं च,
देवीप्रेपितमागतम् । तदा मेने नृपः सत्यं, तस्या वृत्तान्तमीदृशम् ॥ १०८ ॥ विचारयति तत्सत्यं, नृपतिर्विस्मयं भजन् ।
असत्यं महिषी मां न, वृत्तान्तं प्रेषयेत्कदा ॥ १०९ ॥ मानवती सती ज्ञाता, स्वप्नेऽपि नान्यथा मता । मुहुः प्रशंसिता क्षिप्रा,
दन्तासक्ता तथाऽद्य सा ॥ ११० ॥ तया कथं कृतं चैतत्, धिक् तां दुष्कर्मकारिणीम् । लज्जास्पदं कृतं तया, दर्शये वदनं
कथम् ? ॥१११॥ धिक्कारः कुलटेऽस्तु त्वां, कथं त्वं लज्जसे न हि ?। दुर्गोप्यमस्ति दुष्कृत्य-मिति न ज्ञायते किमु ?॥११२॥
चिन्तयति नृपश्चेत्थं, तद्दोषो न मनागपि । दोषभागहमेव स्या-मेकाकिन्येव रक्षिता ॥ ११३ ॥ यौवनोद्भेदसम्प्राप्ते, विरहो
दुःसहो भवेत् । तादृशसद्ममध्ये सा, कथमेकाकिनी वसेत् ? ॥११४॥ इतोऽहमपि गच्छेयम्, कथमुज्जयिनीं प्रति ? । न व्यतीता
हि षण्मासी, लग्नोत्सवदिनात्परम् ॥ ११५ ॥ गोत्रजपूजनेऽपूर्णे, राड् न विसर्जयिष्यति । इति विचारमग्नो हि, ग्रहिलो
वाऽभवन्नृपः ॥११६॥ दूत उत्तरदानेन, राज्ञाऽवन्तीं व्यसृज्यत । क्रमेणागत्य तेन तत्, महिष्यै पत्रमर्पितम् ॥ ११७ ॥ राज्ञो

मृषावाद-
परिहारे
श्रीमान-
तुङ्ग-
मानवती-
चरित्रम् ॥

॥ २५ ॥

षष्ठः
सर्गः ॥

निर्वाच्य पत्रं ता, वदन्ति च मिथः समाः । सत्वरं पतिरागन्ता, तां च तिरस्करिष्यति ॥ ११८ ॥ मानवतीं प्रतिबद्ध्य, कशाभिस्ताडयिष्यति । हसिष्यामो वयं दृष्ट्वा, तालीर्दत्वा मिथो मिथः ॥ ११९ ॥ षण्मासेऽतिक्रमे क्ष्मापो, वक्ति दक्षिण-भूपतिम् । तन्मां व्यसर्जय शीघ्रं, पूर्णं चेद्गोत्रजार्चनम् ॥ १२० ॥ सोऽवागहं न जाने तत्, प्रत्युतास्ति तवार्चनम् । भवद्भि-र्गोत्रजः पूज्यो, गत्वाऽवन्तीं प्रति नृप ! ॥१२१॥ महिष्या ते म उक्तं यत्, षण्मासीं गोत्रजान्नृपः । पूजयिष्यत्यतः कन्यां, त्वं प्रेषयेस्तदैव हि ॥१२२॥ मानतुङ्ग उवाचेति, वार्तेयं गोत्रजस्य का ? । पूजनं तन्न जानेऽहं, वञ्चितस्ते गुरुस्त्रिया ॥१२३॥ लग्नप्रथमरात्रौ साऽऽ–दयित्वोच्छिष्टखादनम् । उवाच गृहिणीप्राप्तिः, षण्मास्यनन्तरं भवेत् ॥१२४॥ विसर्जयिष्यति त्वां सः, श्वशुरस्ते ततः परम् । तस्या उक्त्या स्थितोऽत्राहम्, देवी नास्ति मया सह ॥ १२५ ॥ दलस्तम्भनराडूचे, गुरुपत्नी न तादृशी। विप्रतार्यावयोरित्थं, काचित्सा वञ्चिका गता ॥१२६॥ द्वयोर्वार्ता परिश्रुत्य, खी–खी–खी–त्यहसत्सभा। धूर्ता काचित्प्रतार्या-ऽगात्, न तत्र संशयास्पदम् ॥१२७॥ मानतुङ्गो गमार्थी च, सज्जोऽभूत्तदनन्तरम् । सोऽपि निजकन्यां प्रैषीत्, धनादिभिः प्रपू-रिताम् ॥१२८॥ हयगजरथाधिक्यं, कोटिस्वर्णं तथार्पितम् । पितृभ्यां च प्रणम्यैषा, प्रस्थिता रत्नवत्यपि ॥ १२९॥ रत्नवती-सहायः स, प्रस्थितो मानतुङ्गराट् । शृण्वानः स्वं यशोगानं, बन्दिजनसमीरितम् ॥१३०॥ निवृत्तस्तौ विसृज्यैवं, दलस्तम्भन-भूपतिः । मानतुङ्गश्च सभार्यो, जगामोज्जयिनीं प्रति ॥१३१॥ योगिन्यधिष्ठितोद्यानं, दृष्ट्वा तामस्मरन्नृपः । अपश्यच्च स्वयं गत्वा, कुत्रापि तां ददर्श न ॥१३२॥ ततः स विललाप च, वृक्षादीनि व्यलापयत् । गुणिनि ! स्वामिनि ! कुत्र, गता संत्यज्य मामिह ॥१३३॥ उपकार्यस्ति कोऽपि मे, यत्तां मेलयेत्सुधीः । प्रियस्य विरहं क्षणं, क्षमितुं न हि शक्यते ॥ १३४ ॥ यदि कुत्रापि

गुप्तासी–दर्शनं देहि सत्वरम् । पुनः श्रावय ते वीणां, स्मर्यते सा मुहुर्मुहुः ॥ १३५ ॥ आगमनस्य काले तु, त्वया सहा-
गमम्पुनः । गमनावसरे त्वया, विना किम्प्रचलिष्यति ? ॥१३६॥ तव सेवाऽनिशं कर्ता, नाऽज्ञालोपो मया कृतः । तथापि
मां विहायेत्थं, कथनेन विना गता ॥ १३७ ॥ वाटिकायां स वृक्षेभ्यो, योगिनी क्वेति पृच्छति । तयाधिष्ठितमार्गं मां, दर्श-
यतोपकारिणः ! ॥ १३८ ॥ तदा पवनधूतास्ते, शिरोधूननछद्मतः । न दृष्टेति ददति तं, प्रत्युत्तरं च भूरुहाः ॥ १३९ ॥
केकिभ्यः पृच्छतीत्थं स, तत्केका श्रूयते तदा । राजा जानाति नास्तीह, कथयन्तीति केकिनः ॥ १४० ॥ वाटिकायां
वियोगी राट्, भ्रमतीत्थमितस्ततः । पृच्छन्ति सुभटाः स्वामिन्!, का चिन्ता हृदये तव ? ॥ १४१ ॥ प्रीतिं कृत्वा गता सा
चेत्, यथेष्टं नाम गच्छतु । तादृश्यः काश्चिदागत्य, मिलिष्यन्तीति निश्चितम् ॥ १४२ ॥ विलापेन न साऽऽगच्छेत्, गन्तव्यं
सत्वरं ततः । चिन्तात्यागेन हे नाथ!, मनः प्रसन्नतां नय ॥ १४३ ॥ तस्याश्च नास्ति दोषोऽयं, जाता षण्मास्यतोऽत्र नः ।
लग्नकार्ये समाप्यास्याः, शुद्धिस्तु कारिता न हि ॥ १४४ ॥ योगिन आदरोत्कण्ठा, इति किं विस्मृतं नृप ! । विनादरेण किं
तिष्ठेत् ?, मानिनी साऽपि योगिनी ॥ १४५ ॥ इत्थं स्थिरीकृतो राजा, सुभटैः कालवेदिभिः । प्रस्थितोऽध्वनि गन्तव्ये,
तां स्मरन् चेतसि तथा ॥ १४६ ॥ एवं क्रमेण गच्छन् स, तस्मिन्नरण्य आगतः । अप्सरसा सहात्र प्राक् पाणिग्रहणमस्मरत्
॥ १४७ ॥ चरणोदकपानस्य, भूमिकामपि दृष्टवान् । तथा वृषभरूपेण, भ्रान्तस्तत्स्थानकं स्मृतम् ॥ १४८ ॥ यावदेक-
वियोगो न, शान्तोऽभून्नृपचेतसि । उत्पन्नस्तावदेवान्य, अहो मोहः सुदुःसहः ॥ १४९ ॥ प्रस्थानसमये तत्र, समागाद्दूत
एककः । दलस्तम्भनभूपेन, मुक्तः सहाययाचिना ॥ १५० ॥ मानतुङ्गं प्रति प्रोचे, निवर्तस्व मया सह । पुनश्च शृंगिपत्तनं,

समागच्छ महीपते ! ॥ १५१ ॥ मानतुङ्गोऽप्यवादीत्तं, तस्य किं कारणं वद । त्वद्राज्ञश्चोरितं नास्ति, किञ्चिद्धेमादिकं मया ॥ १५२ ॥ उल्लङ्घितं धरार्धं च, विषमोध्वा च लङ्घितः । तथापि कारणं ब्रूहि, निवर्तय पुनस्तदा ॥१५३॥ कारणं वक्ति दूतो यत्, वर्ततेऽजितशत्रुराट् । चन्देरीनगरीपालो, रत्नवतीमियेष सः ॥१५४॥ प्रार्थिताऽपि कनी तेन, भूपतिना न्यषेधि सः । रत्नवतीच्छति त्वां च, तेन सा परिणायिता ॥ १५५ ॥ किञ्च ततोऽचलस्तदा, युद्धार्थी स समागतः । वक्ति यद्देहि कन्यां वा, युद्धं कुरु मया सह ॥ १५६ ॥ दलस्तम्भनसैन्यं न, बलवत्तादृशं तथा । यथा सज्जीभवेद्युद्धे, शत्रुपराजयेच्छया ॥ १५७॥ तस्मादाह्वयति त्वां स, कृपयाऽऽगमनं कुरु। मानतुङ्गोऽपि दूतस्य, वाचा कृपान्वितोऽभवत् ॥१५८॥ संमार्ज्य श्मश्रुणी राज्ञा, कृपाणं तुलितं करे । सज्जीकृत्य सैनिकान्, दक्षिणां प्रस्थितः पुनः ॥ १५९ ॥ व्यसर्जयदवन्तीं तां, रत्नवतीं स बुद्धिमान् । क्रमेण कतिभिर्दिनैः, समागान्मुंगिपत्तनम् ॥ १६० ॥ ह्रेषणैस्तूर्यनादैश्च, ज्ञातवान्दक्षिणानृपः । जामातृश्वशुरौ प्रेम्णा, संश्लिष्टौ दृढभावतः ॥ १६१ ॥ द्वयोर्योगेन भीतोऽसौ, जितशत्रुर्व्यचारयत् । पराजेतुं कथं शक्यौ, जामातृश्वशुरौ बलौ ॥ १६२ ॥ निवर्ते यदि चन्देरीं, परित्यज्य विरोधनम् । अपयशो भवेत्किञ्च, गमिष्याम्युपहास्यताम् ॥ १६३ ॥ भवितव्यं भवेदेव, क्षत्रियत्वं न मुच्यते । श्रेष्ठात्पराजयेऽपि स्या-ज्जगति यशसां चयः ॥ १६४ ॥ समागतः स सैन्योऽपि, गम्यं केन मुखेन मे । यदि पश्चाद्गमिष्यामि, लज्जन्ते पितरस्तदा ॥ १६५ ॥ सम्पाते वैरिणां जाते, गन्तव्यं न वराकताम् । यथा वासे समुद्रस्य, भेतव्यं मकरान्न हि ॥ १६६ ॥ एकत्र मालवेशेन, सहितो दक्षिणापतिः । चन्देरीपतिरन्यत्र, संस्थितो युद्धकाम्यया ॥ १६७ ॥ दिक्षु चतुर्षु सैन्ये द्वे, दृश्येते युद्धलालसे । तत्र हयाश्च कूर्दन्ते, कुरङ्गाः कानने यथा ॥१६८॥ षट्त्रिंशदायुधैर्वीराः, प्रत्येकं सज्जि-

तास्तदा। सज्जवाहान्समारुह्य, युद्धाय प्रस्थिताः समे ॥१६९॥ सेनाद्वयमभूत्सज्जं, जृम्भन्ते तूर्यनिःस्वनाः। दिशास्तैः पूरिताः सर्वे, मेघगर्जनया यथा ॥१७०॥ द्वयोर्जन्यसमारम्भो-ऽभवत्कातरदुःखदः। अश्वखुरोद्धुता धूलिः, सूर्यमाच्छादयत्तदा ॥ १७१ ॥ महायोधास्तदाश्लिष्टा, घटायां खेलयन्त्यसिम्। शिरस्त्राणाय ये रक्त-वस्त्राणि वेष्टितानि वै ॥१७२॥ सवीरगर्जनाः केचिद्बाणानस्यन्ति सत्वरम्। केचिच्छत्रून्समावेष्ठ्य, पराजयंत तत्क्षणम् ॥ १७३ ॥ चकम्पे धरणिः सर्वा, योद्धृपादप्रहारतः। केचित्पादतले रङ्काः, पञ्चत्वं प्राप्नुवन्नपि ॥ १७४ ॥ ववृधे मस्तकैर्भूमि-र्नारिकेलचयैर्यथा। शोणितसरिता तत्र, वहति पूर्णतामिता ॥ १७५ ॥ यद्यपि तमसां राशे-र्दर्शनं न भवेन्मिथः। कुन्तादिघट्टनक्षर-दग्निस्तदा सहायकः ॥१७६॥ क्रमेण जितशत्रुराड्, हारितो नश्यति स्म च। अवन्तीशो जये तूर्य-मवादयन्मुदा ततः ॥ १७७ ॥ श्वशुराग्रहमादाय, गतोऽसौ शृंगिपत्तनम्। भोज्यपानादिना तुष्टो, युद्धखेदमपाकरोत् ॥ १७८ ॥ तस्मिन्नवसरे मेघो, गर्जितो केसरी यथा। विद्युत्स्वकीयचापल्यं, प्रादर्शयत्रिविष्टपे ॥ १७९ ॥ तरुगिरिधराश्चापि, गर्जन्ति प्रतिघोषतः। लोका जानन्ति यद् व्योम, निपतिष्यत्यधः किमु ॥ १८० ॥ नभः सर्वत्र कृष्णत्वं, नूतनमेघेन चाप्नुवत्। यथा कृष्णाम्बरं धत्तं, शोकसन्दर्शनाय वै ॥१८१॥ स्थाने स्थाने बकानां च, शुभ्रत्वं दृश्यते जनैः। दर्दुरव्याजतो वारि, दुःखयते वियोगिनम् ॥ १८२ ॥ तस्मिन्नवसरे मेघो, वारिधारा ववर्ष च। सर्वत्र जलविस्तारः, पृथिवीशाटिका यथा ॥ १८३ ॥ खगा नीडं परित्यज्य, न गच्छन्ति मनागपि। पथिका अध्वखेदाय, कटिबद्धा भवन्ति न ॥ १८४ ॥ संलिख्य विषमाख्यानं, महिषीं प्रति शुद्धधीः। चतुर्मासं श्वशुरस्य, गृहेऽस्थान्मानतुङ्गराट् ॥ १८५ ॥ इतश्च मानवत्यापि, तत्रैकस्तम्भसद्मनि। प्रसवितः सुतः काले, पूर्णचन्द्रमनोहरः ॥१८६॥

यामिक आज्ञया तस्या, देवीं विज्ञापयत्तदा । उक्तं च नृपतेर्हर्षो, वर्धनीयो विलख्य तत् ॥ १८७ ॥ सम्मिल्य सर्वराज्ञीभिः, भूपतिं प्रेषितं दलम् । कतिभिर्दिवसैर्दूत-स्तस्मै पत्रं प्रदत्तवान् ॥ १८८ ॥ पत्रं निर्वाच्य खिन्नोऽसौ, विचारयति चेतसि । गत्वा शीघ्रं समीक्षेऽहं, मानवतीसुतं खलु ॥ १८९ ॥ प्रस्थितस्तद्विचार्यायम्, धरँश्चित्ते च योगिनीम् । शीघ्रं प्रत्यागतोऽवन्तीम्, मानतुङ्गमहीपतिः ॥ १९० ॥

इति मानवतीचरित्रे मानवतीपुत्रजनननामा षष्ठः सर्गः ।

## सप्तमः सर्गः ।

विवेश नगरीं भूपः, परिच्छेदवृत्तो यदा । तदा संवर्धयामासुः, मुक्ताभिः पौरकन्यकाः ॥ १ ॥ प्रणमन्ति जनाः पादे, स्नेहभावेन भूपतौ । इत्याडम्बरसंयुक्त-स्तदाऽगात्स्वस्य सद्मनि ॥२॥ विसृज्य सुभटान्सर्वान्, सन्मानपूर्वकं तदा । एकाकी भूप आगच्छत्, शुद्धान्तं प्रति सत्वरम् ॥३॥ रत्नवत्यादिमानिन्य, उत्तस्थुर्विनयान्विताः । निषण्ण आसनं प्राप्य, निषेदुः प्रमदा अपि ॥४॥ पृच्छति सर्वनारीभ्यो, वार्ता गर्भस्य सर्विका । मानवती कथं पुत्रं, प्राप्तवतीति चाब्रवीत् ॥५॥ खडखडं हसन्ति ताः, कथयन्ति पतिं प्रति । मानवतीकुवार्ताभिः, किं स्यात्तव प्रयोजनम् ? ॥ ६ ॥ खेलयति सुतं गौरी, विशालाङ्गमनोहरम् । प्रसवितुं शिशुं

भर्त्रा, विना हि शक्यते तया ॥ ७ ॥ धन्यभाग्योऽसि भर्तस्त्वं, लब्धा यत्तादृशी प्रिया । तत्पुत्रं स्थापये राज्ये, कुलमुज्ज्वालयिष्यति ॥ ८ ॥ पश्य पुत्रमुखं शीघ्रं, गत्वा तस्या निकेतनम् । प्रागत्र कथमागच्छो, विज्ञातः समयो न हि ॥ ९ ॥ तुभ्यं मानवती सती, कोपं करिष्यति प्रभो ! । त्वं गच्छ सत्वरं तत्र, वृथाऽस्मल्लज्जतां न हि ॥ १० ॥ इत्थं विहसितो राजा, मन्त्रिणमाह्वयन्निजम् । कथं मानवतीपुत्रो, जात इति च पृष्टवान् ॥ ११ ॥ जाने नेति प्रधानः स, उवाच नृपतिम्प्रति । राज्ञीतस्तच्छ्रुतं सर्वं, न कुतं श्रुतिगोचरम् ॥ १२ ॥ गत्वैतत्प्रेक्षणीयं च, तस्य किं कारणं भवेत् । विचार्येति गतौ तत्र, मन्त्रिनृपौ हि सत्वरम् ॥ १३ ॥ अचलानि गृहाङ्गानि, यदा पश्यति भूपतिः । तदा विस्मयमापन्नः, कथंकारं भवेदिति ॥ १४ ॥ यन्त्रमुद्घाट्य विष्टोऽसौ, ससुतां ताञ्च दृष्टवान् । साऽपि तदा पतिं दृष्ट्वा, सलज्जमुत्थिताऽऽसनात् ॥१५॥ पर्यङ्कं निषसादासाव–पश्यद्बालकाननम् । कोपारुणेक्षणैः पत्नीं, भापयति यथोचितम् ॥ १६ ॥ पतिः पृच्छति वामाङ्गि !, त्वं स्थितासीह सर्वदा । प्रसूतिस्ते तथापि मां, विना कस्मादिहाभवत् ॥ १७ ॥ विनाऽन्यपुरुषस्यापि, समागमेन किं स्थितम् ? । श्रुतपूर्वा न वार्तेयं, आश्चर्यमावहेन्न किम् ? ॥ १८ ॥ रङ्गबद्धं निवासस्य, तलमस्ति तथापि किम् । देवस्याराधेनेनाभूत्, पुत्रजन्माथवा तव ॥ १९ ॥ जैनीभूत्वा सुकर्माणि, भूरि प्राप्तानि धर्मिणि ! । कुलं लज्जाऽऽस्पदं जातं, धन्यस्त्वां प्राप्तवानहम् ॥ २० ॥ मुखेनोवक्थ केन त्वं, यत्पातयामि पादयोः । बालस्याऽस्य पिता कः स्याद्–लंकुरुष्व तद्गृहम् ॥ २१ ॥ पूर्यते न मयेच्छा ते, त्वं स्वरूपेण देव्यसि । क्रोधसंयुक्तभूपश्च, तथा गर्जन्नुवाच ताम् ॥ २२ ॥ अविचारी नृपोऽवादीत्, त्वयाऽहं तु पराजितः । कुलहीने ! च निर्लज्जे !, केन मुखेन संस्थिता ? ॥ २३ ॥ प्रागेव विस्मृतं मया, गता

मृषावाद-
परिहारे
श्रीमान-
तुङ्ग-
मानवती-
चरित्रम् ॥

॥ २८ ॥

सप्तमः
सर्गः ॥

त्यक्त्वा च योगिनि । तस्यै दत्ता मयासीश्चेत्, शिष्यात्वेन तदा वरम् ॥ २४ ॥ मानवती तदाऽवोचत्, अविचार्योच्यते त्वया । प्रार्थये यदयोग्यं च, न वाच्यमग्रतो मम ॥ २५ ॥ स्वामिन्नयं शिशुस्ते, स्यादस्थाने तत्र संशयः । अहं ते पादयोर्दासी, सर्वदेच्छामि ते दयाम् ॥ २६ ॥ पश्य नेत्रे समुद्घाट्य, यदावां मिलितौ कदा । विस्मृतं तत्त्वया सर्वं, मया तु स्मर्यते खलु ॥ २७ ॥ जाने त्वं तथ्यमेवैतत्, नो चेद्दास्यामि चिह्नकम् । श्रुत्वैतद्भूपतिः प्रोचे, मिथ्या वदसि हे प्रिये ! ॥ २८ ॥ इति ब्रुवन्नृपस्याग्रे, हारमुद्रे समर्पिते ॥ २९ ॥ दृष्ट्वा विस्मयमापन्नः, पश्यन्नधःस्थितो नृपः । अवादीन्न पुनः किञ्चित्, भेदं च ज्ञातवान्तदा ॥ ३० ॥ प्रोचे मानवती नाथ !, पश्य मां लज्जसे कथम् ? । हारमुद्रे निरीक्षस्व, यदि चिह्नं भवेत्तव ॥ ३१ ॥ सोऽपि विचारयत्येवं, प्राप्तं तदनया कथम् ? । वस्तु ममाऽस्ति दत्तं न, तथाप्यभूत्कथंचन ॥३२॥ मानवतीं तदा प्रोचे, मानिनि ! वद सत्वरम् । हारमुद्रे ममेमे त्वं, प्राप्तवती कथं कुतः ? ॥ ३३ ॥ स्वप्नेऽपि सङ्गतावावाम्, नाभवावेति निश्चितम् । चिह्नं मे तथापि त्वं, कथं प्राप्तवती वद ॥ ३४ ॥ विस्मयजनकं चेदं, त्वया यत्कथितं पुरा । सत्यमुक्त्वा ममाश्चर्यं, निष्कासयाखिलं हृदः ॥ ३५ ॥ तदावगुण्ठनं कृत्वा, बद्धाञ्जलिश्च मानिनी । उवाच भूपतिं सद्यः, तथ्यवार्तां शृणु प्रिय ! ॥ ३६ ॥ मिलिता योगिनी या त्वां, पुरेऽस्मिन्वीणया सह । सदा चरणयोर्यस्या, न्यपतः स्नेहकाङ्क्षया ॥३७॥ कुर्वत्यवमानं ते, कुवाक्यं तु मुहुर्मुहुः । त्वं योगिनीं न विद्धि तां, महीपालाहमेव सा ॥ ३८ ॥ किञ्च दक्षिणमार्गे य–दागादेकसरोवरम् । खचरी परिणीता या, गुप्तमेकाकिना त्वया ॥ ३९ ॥ पीतं तच्चरणोदकं, वृषस्वरूपतोऽभ्रमत् । साऽपि न खेचरी किन्तु, रूपधारिण्यहं स्थिता ॥४०॥ रत्नवत्याः करग्रहे, गुरुपत्नी च याऽभवत् । उच्छिष्टान्नदयित्री च,

॥ २८ ॥

पण्मासीं वासयिव्यपि ॥ ४१ ॥ विपयसुखमारब्धं, तया साकं यथेप्सितं । तव गर्भस्तया दध्रे, चिह्नं तदार्पितं त्वया ॥४२॥ अहमेव गुरुस्त्री सा, मदन्यासीन्न तत्र का । तत्राऽर्पितं तवाङ्कं यत्त–देव वक्ति तत्समम् ॥ ४३ ॥ मदुक्तिः पालिता सर्वा, ज्ञातं न वा त्वया नृप ! । नार्यन्तग्रहणे कश्चि–ल्लाभो भवेत्कदा न हि ॥ ४४ ॥ अङ्गजोऽयं तवैवाऽस्ति, गृहाणाङ्के प्रहर्षतः । कुटिला स्त्रीति सन्देहं, मागास्त्वं बुद्धिमन्नृप ! ॥ ४५ ॥ उपानदुपमाऽहं स्यां, त्वं शिरोवेष्टनं भवेः । किञ्च कण्टकवृक्षोऽहं, त्वं तु सुरतरुप्रभः ॥ ४६ ॥शर्वर्यहं तमो युक्ता, वर्तसे त्वं प्रदीपवत् । मया तेऽविनयो योऽभूत्, तदर्थं प्रार्थये क्षमाम् ॥ ४७ ॥ वचनपालनायाऽहं, कृतवत्यखिलां क्रियाम् । यदिच्छसि मयि प्रिय !, कुरुष्व तदतः परम् ॥४८॥ कथं प्रतारयिष्यति नारी–यं मां नृणां पतिम् । अभिमानं न तद्योग्यं, नष्टं सुरासुरेष्वपि ॥ ४९ ॥ कान्तः कान्तावचः श्रुत्वा, मुखे क्षिप्त्वाऽङ्गुलिं तदा । शिरः कम्पनसंयुक्तः, स्त्रीचरित्रं व्यचारयत् ॥ ५० ॥ अहो नारीचरित्रं यत्, अहं च विप्रतारितः । पुरुषाङ्गबलात्स्त्रीणां, हृद्बलमधिकं भवेत् ॥ ५१ ॥ कदा न तापनीया सा, बलैव नाबला भवेत् । परीक्षेय पुनश्चेत्थं, तर्हि घातं करिष्यति ॥ ५२ ॥ तदीया कीदृशी बुद्धि–र्ययाहं पादनामितः । सुतोऽपि सुतरां प्राप्तो, धर्मोऽत्र वर्तते सखा ॥ ५३ ॥ इति विचार्य भूपाल, आगात्सदोगृहं तदा । हयगजरथाः सर्वे, भृङ्गारसंयुताः कृताः ॥ ५४ ॥ तथाऽऽडम्बरपूर्वेण, तस्या आनयनाय सः । सुभटयुतमन्त्रिणं, प्रैषीन्मानवतीं प्रति ॥ ५५ ॥ महोत्सवं तदाऽकृत, सहर्षः स नृपोत्तमः । अमन्दानन्दसन्दोहौ, संगतौ हर्षनिर्भरौ ॥ ५६ ॥ मानतुङ्गस्य तस्यां वै, स्नेहः प्रववृधे महान् । निष्कपटप्रलापेन, व्यत्यगात्समयस्तदा ॥ ५७ ॥ तदा मानवती प्रोचे, न भापस्व मां प्रति । पूर्णदुःखं निपात्याद्य, प्रलपसि कथं भवान् ॥ ५८ ॥ एकस्तम्भनिवा-

सेऽहं, सेहे दुःखान्यनेकशः । अद्यापि हृदये शल्यं, शरक्षत इवास्ति मे ॥ ५९ ॥ मम यशः सपत्नीषु, किञ्चिदपि न रक्षितम् । बहिर्निष्कासिता चाहं, मक्षिका घृततो यथा ॥६०॥ विहस्य नृप ऊचे तां, गम्भीरस्वरतस्तदा । ममैवाद्यापि दोषान्त्वं, निष्कासयसि भूरिशः ॥ ६१ ॥ मोचितं मे त्वया मानं, कोपश्च क्रियते पुनः । नमामि पादयोस्तेऽहं, चेत्त्वयाऽऽदिश्यते यदि ॥ ६२ ॥ तदा मानवती पत्युः, पादयोः पतिता मुदा । देवता दम्पतीव द्वाव–शोभेतां विलासतः ॥ ६३ ॥

॥ इति मानवतीचरित्रे मानवतीप्रतिज्ञापूर्तिनामा सप्तमः सर्गः ॥

---

# अष्टमः सर्गः ।

---

रमेते हसतश्चैव, गायतः क्रीडतोऽपि च । वनोपवनमागत्य, गमयामासतुर्दिनान् ॥ १ ॥ दृष्टिगोचरतां त्यक्त्वा, गच्छतो न मनागपि । कृत्वा दिने दिने नूत्न–वेषमानन्दतां तदा ॥ २ ॥ सपत्न्यस्तत्सुखं दृष्ट्वा, दहन्ति स्म च दुराशयाः । किन्तु कस्या बलं नास्ति, येनानन्दत्रुटिर्भवेत् ॥ ३ ॥ राजा मानवतीस्नेहात्, परतन्त्रस्तथाऽभवत् । यथा पङ्कजपुष्पेण, द्विरेफो वशतामियात् ॥ ४ ॥ मदनभ्रम इत्याख्यां, चक्रतुर्बालकस्य तौ । क्रमेण पठनेनाऽसौ, सर्वविद्याविशारदः ॥ ५ ॥ जिनालये

ञ्चयं कृत्वा, सार्थकीक्रियते धनम् । आराध्यते सम्यक्त्वं, मानवत्या शुभाशयात् ॥ ६ ॥ तयोर्भुञ्जानयोर्भोगं, कतिचिद्वयत्य-
गुर्दिनाः । पुरोपकण्ठमागच्छ-द्धर्मघोषो महामुनिः ॥ ७ ॥ पौरास्तं वन्दितुं जग्मु-रुद्यानं पुष्पितद्रुमम् । पृष्टा भूपेन
भोः कुत्र, कस्माच्च गम्यतेऽधुना ॥ ८ ॥ ऊचुस्ते वनमागच्छ-द्धर्मघोषो मुनीश्वरः । नागरास्तन्नमस्कर्तुं, गच्छन्ति विमला-
ननाः ॥ ९ ॥ मानवतीसखो राजा, परिवारपरिवृतः । श्रुत्वा लोकमुखाद्वार्ता-मगच्छत्तत्र वंदितुम् ॥ १० ॥ पञ्चाभिगम-
मापाल्य, प्राणमन्मुनिपुङ्गवम् । राजा मानवतीयुतो, निषसादोचितासने ॥११॥ दत्त्वा मुनिर्धर्माशिषं, प्रारेभे देशनां तदा ।
भवाब्धौ मग्नजंतूना-मज्ञानध्वान्तनाशिनीम् ॥ १२ ॥ पापवृत्तीः परित्यज्य, धर्मं चरत देहिनः ! । मन्यध्वं हितशिक्षां यत् ,
मुक्तिस्त्री पाणिगा भवेत् ॥ १३ ॥ मिथ्या पत्न्यादिमाया या, घनच्छायेव चञ्चला । पक्षिणां सङ्गमस्ताव-द्यावदुड्डयनं
न हि ॥ १४ ॥ कश्चिद्ब्रवीति तातेति, कश्चिद्दासेति वक्ति हि । अन्यः स्वमिन्निति ब्रूते, विभागा आत्मनस्तथा ॥ १५ ॥ स्नेहो
वा क्रियतां वैरं, सत्यं वा कपटं तथा । भवितव्यं समैरन्ते, धूलिमयैरसंशयम् ॥ १६ ॥ प्राणेभ्योऽपि प्रियो यः स्यात् , स्नेह-
बद्धश्च सर्वदा । सोऽपि महापथं गच्छन् , मनाक् प्रष्टुं न तिष्ठति ॥ १७ ॥ केचिद्गताश्च गच्छन्ति, गमिष्यन्त्यपरेऽपि च ।
तस्मिन्नध्वनि पुण्येन, हीना अनन्तमानवाः ॥ १८ ॥ रङ्कराज्ञोरपि प्रान्ते, समाध्वन्येव सङ्गतिः । उत्तरन्तु भवाब्धिं वै, पुण्य-
पाथेयसंयुताः ॥ १९ ॥ क आमकुम्भविश्वासो, धनस्य च मदो हि कः । सन्ध्यारागो यथा तद्व-दाविर्भूय प्रणश्यति ॥ २० ॥
दानशीलतपोभाव-भेदैश्चतुर्भिरन्वितम् । तं धर्मं भविनः प्राप्य, कर्माणि नाशयन्ति वै ॥२१॥ सुकृतैरेव पार्योऽसौ, भवो नान्यः
सहायकः । अतः पापात्परावृत्तिं, दर्शयन्त्यागमाः समे ॥ २२ ॥

उक्तश्च सूक्तमुक्तावल्यां—

पूज्यपूजा दया दानं, तीर्थयात्रा जपस्तपः ।
श्रुतं परोपकारश्च, मर्त्यजन्मफलाष्टकम् ॥ १ ॥
शिष्टे सङ्गः श्रुतौ रङ्गः, सद्ध्याने धीर्धृतौ मतिः ।
दाने शक्तिर्गुरौ भक्तिः, षडेते सुकृताकराः ॥ २ ॥
देवपूजा गुरूपास्तिः, स्वाध्यायः संयमस्तपः ।
दानं चेति गृहस्थानां, षट्कर्माणि दिने दिने ॥ ३ ॥
जिनपूजनं विवेकः, सत्यं शौचं सुपात्रदानं च ।
महिमक्रीडागारः, शृङ्गारः श्रावकत्वस्य ॥ ४ ॥
यद्भक्तिः सर्वज्ञे, यद्यत्नस्तत्प्रणीतसिद्धान्ते ।
यत्पूजनं यतीनां, फलमेतज्जीवितव्यस्य ॥ ५ ॥

दानं सुपात्रे विशदं च शीलं, तपो विचित्रं शुभभावना च ।
भवार्णवोत्तारणसत्तरण्डं, धर्मं चतुर्धा मुनयो वदन्ति ॥ ६ ॥
जिनेन्द्रपूजा गुरुपर्युपास्तिः, सत्त्वानुकम्पा शुभपात्रदानम् ।
गुणानुरागः श्रुतिरागमस्य, नृजन्मवृक्षस्य फलान्यमूनि ॥ ७ ॥
त्याज्या हिंसा नरकपदवी नानृतं भाषणीयं,
स्तेयं हेयं सुरतविरतिः सर्वसङ्गान्निवृत्तिः ।
जैनो धर्मो यदि न रुचितः पापपङ्कावृतेभ्यः,
सर्पिर्दुष्टं किमिदमियता यत्प्रमेही न भुङ्क्ते ॥ ८ ॥
त्रिसन्ध्यं देवार्चां विरचय चयं प्रापय यशः,
श्रियः पात्रे वापं जनय नयमार्गं नय मनः ।
स्मर क्रोधाद्यारीन् दलय कलय प्राणिषु दयां,

जिनोक्तं सिद्धान्तं शृणु वृणु जवान्मुक्तिकमलाम् ॥ ९ ॥

कर्तव्यं जिनवन्दनं विधिपरैर्हर्षोल्लसन्मानसैः,
सच्चारित्रविभूषिताः प्रतिदिनं सेव्याः सदा साधवः ।
श्रोतव्यं च दिने दिने जिनवचो मिथ्यात्वनिर्णाशनम्,
दानादौ व्रतपालने च सततं कार्यारतिः श्रावकैः ॥ १० ॥

वन्द्यास्तीर्थकृतः सुरेन्द्रमहिताः पूजां विधायामलां,
सेव्याः सन्मुनयश्च पूज्यचरणाः श्राव्यं च जैनं वचः ।
सच्छीलं परिपालनीयमतुलं कार्यं तपो निर्मलम्,
ध्येया पञ्च नमस्कृतिश्च सततं भाव्या च सद्भावना ॥ ११ ॥

देवं श्रेणिकवत्प्रपूजय गुरुं वन्दस्व गोविन्दवत्,
दानं शीलतपःप्रसङ्गसुभगां चाभ्यस्व सद्भावनाम् ।

श्रेयांसश्च सुदर्शनश्च भगवानाद्यः स चक्री यथा,
धर्म्ये कर्मणि कामदेव वदहो चेतश्चिरं स्थापय ॥ १२ ॥

जन्तूनामवनं जिनेशमहनं भक्त्यागमाकर्णनं,
साधूनां नमनं मदापनयनं सम्यग्गुरोर्माननम् ।
मायाया हननं क्रुधश्च शमनं लोभद्रुमोन्मूलनं,
चेतः शोधनमिन्द्रियाश्वदमनं यत्तच्छिवोपायनम् ॥ १३ ॥

त्रैकाल्यं जिनपूजनं प्रतिदिनं सङ्घस्य सन्माननं,
स्वाध्यायो गुरुसेवनं च विधिना दानं तथाऽऽवश्यकम् ।
शक्त्या च व्रतपालनं वरतपो ज्ञानस्य पाठस्तथा,
सैष श्रावकपुङ्गवस्य कथितो धर्मो जिनेन्द्रागमे ॥ १४ ॥

कृत्वाऽर्हत्पदपूजनं यतिजनं नत्वा विदित्वाऽऽगमं,

हित्वा संगमधर्मकर्मठधियां पात्रेषु दत्त्वा धनम् ।
गत्वा पद्धतिमुत्तमक्रमजुषां जित्वाऽन्तरारिव्रजम्,
स्मृत्वा पञ्च नमस्क्रियां कुरु करक्रोडस्थमिष्टं सुखम् ॥ १५ ॥
भक्तिः श्रीवीतरागे भगवति करुणा प्राणिवर्गे समग्रे,
दीनादिभ्यः प्रदानं श्रवणमनुदिनं श्रद्धया सुश्रुतीनाम् ।
पापापोहे समीहा भवभयमसमं मुक्तिमार्गानुरागः,
सङ्गो निसङ्गचित्तैर्विषयविमुखता हर्म्यिणामेष धर्मः ॥ १६ ॥
कर्तव्या देवपूजा शुभगुरुवचनं नित्यमाकर्णनीयं,
दानं देयं सुपात्रे प्रतिदिनममलं पालनीयं च शीलम् ।
तप्यं शुद्धं स्वशक्त्या तप इह महती भावना भावनीया,
श्राद्धानामेष धर्मो जिनपतिगदितः पूतनिर्वाणमार्गः ॥ १७ ॥

इत्युपदेशमाकर्ण्य, प्रतिबुद्धो नृपस्तदा । बद्धाञ्जलिर्महाक्षपि–मित्यूचे स उदारधीः ॥ २३ ॥ स्वामिन्मानवतीयं मां, पादावपातयत्कथम्? । वचनं पालितं सम्यग्, मदुपाया विनाशिताः ॥२४॥ तस्य किं कारणं जातं, ज्ञापय कृपया हि माम् । राज्ञीत्युक्ते द्वयोः, पूर्वभवं गुरुरवोचत ॥ २५ ॥ जम्बूद्वीपे सुविस्तारे, क्षेत्रं भारतसंज्ञकम् । पृथिव्या भूषणं तत्र, पृथिवी-भूषणं पुरम् ॥ २६ ॥ राजा तिलकसेनोऽत्र, सेनाऽस्य तिलकं भुवि । धनदत्ताख्य इभ्योऽत्र, तस्य त्वमङ्गजः खलु ॥ २७ ॥ आख्यया जिनदत्तस्त्वं, जिनपालस्तवाऽनुजः । व्यापारेण स्वकीयं वै, वर्तनमभवत्पुरा ॥ २८ ॥ क्रमेण जिनपालस्या–भवत्सद्गुरुसङ्गतिः । प्रत्याख्यानं मृषावादे, गृहीतं तेन तन्मुखात् ॥२९॥ व्यापारे कपटं नैव, नैव हास्येऽपि सर्वदा । मनस्येवं स जानाति, धूलिर्लभ्येत छद्मना ॥ ३० ॥ वाणिज्येऽपि वदेत्सत्यं, लाभः कदा न जायते । अकरोद्धर्मधर्मं स, मग्नश्च तिष्ठति सदा ॥ ३१ ॥ एकदा जिनदत्तोऽप्य–मीक्षणायापणं गतः । तेन लाभस्तु न दृष्ट, उत मूल्येऽपि न्यूनता ॥३२॥ आहूय जिनपालं स, जिनदत्तश्च पृच्छति । दूरे तिष्ठतु लाभस्तु, एतावन्न्यूनता कथम्? ॥ ३३ ॥ एतादृशं त्वमुद्योगं, मूर्खाऽशिक्षत कुत्र रे! । एवं व्यापारतो भ्रातः!, प्रचलेद्वर्तनं कथम्? ॥३४॥ किंवाऽभूः पारदारिकः?, तेन नैःस्वं प्रजायते । वद सत्यं त्वया कुत्र, प्रभूतं व्ययितं धनम् ॥ ३५ ॥ जिनपालस्तदावादीत्, कुपात्रे न धनव्ययः । धन–तृष्णा तव स्याच्चेत्, वाणिज्यं करणं कुरु ॥ ३६ ॥ धनं धरातले तिष्ठेत्, प्रान्ते न जायते सखा । सुकृतदुष्कृतान्येव, तदाऽनुयान्ति भृत्यवत् ॥ ३७॥

उक्तञ्च सूक्तमुक्तावल्यां—

द्रव्याणि तिष्ठन्ति गृहेषु नार्यो, विश्राममूभौ स्वजनाः स्मशाने ।

देहश्रितायां परलोकमार्गे, कर्मानुगो याति स एक जीवः ॥ १८ ॥

भ्राता मे गुणवानिति, विज्ञातं पूर्वतो मया । किन्त्वधुना करालत्वं, त्वया प्रदर्श्यते खलु ॥ ३८ ॥ जिनदत्तो निशम्य तत्, भृशं चुक्रोध बन्धवे । पञ्चप्रस्थप्रमाणेन, निर्दयस्तमताडयत् ॥ ३९ ॥ मर्मभेदेन मृत्वा स, कृत्वा लघुभवं तथा । च्युत्वाऽन्यभवे जातो, मानवतीस्वरूपतः ॥ ४० ॥ जिनदत्तोऽपि सोदर–विरहव्यथितो भृशम् । कतिकालान्तरं मृत्वा, जज्ञे स चात्र भूपतिः ॥ ४१ ॥ स एव मानतुङ्गस्त्वं, संशयो नास्ति लेशतः । उत्पन्नोऽसि नृपत्वेन, तदूर्ध्वं ज्ञायते त्वया ॥ ४२ ॥ प्राक्तनवैरभावेन, दुःखं तस्यै त्वयार्पितम् । तयाऽपि सत्यवादिन्या, पालितं वचनं पुनः ॥ ४३ ॥ मृषावादव्रतस्यैतत्, फलं ज्ञात्वा नृपोऽवदत् । एतावत्समयः स्वामिन्!, पृथैव गालितो मया ॥ ४४ ॥ मुनिपुङ्गव ऊचे यद–स्ति पञ्च महाव्रतम् । तथा द्वादश गौणानि, तेष्विदं सारवत्खलु ॥ ४५ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

कुर्वन्ति देवा अपि पक्षपातं, नरेश्वराः शासनमुद्वहन्ति ।
शान्ता भवन्ति ज्वलनादयो, यत्तत्सत्यवाचां फलमामनन्ति । ॥ १९ ॥
तस्याग्निर्जलमर्णवः स्थलमरिर्मित्रं सुराः किंकराः,
कान्तारं नगरं गिरिर्गृहमहिर्माल्यं मृगारिर्मृगः ।

पातालं विलमस्त्रमुत्पलदलं व्यालः शृगालो विषं,
पीयूषं विषमं समं च वचनं सत्यांचितं वक्ति यः ॥ २० ॥
विश्वासायतनं विपत्तिदलनं देवैः कृताराधनं,
मुक्तेः पथ्यदनं जलाग्निशमनं व्याघ्रोरगस्तम्भनम् ।
श्रेयः संवननं समृद्धिजननं सौजन्यं संजीवनम्,
कीर्तेः केलिवनं प्रभावभवनं सत्यं वचः पावनम् ॥ २१ ॥
राज्यं यान्तु श्रियो यान्तु, यान्तु प्राणा विनश्वराः ।
या मया स्वयमेवोक्ता, वाचा मा यातु शाश्वती ॥ २२ ॥
एवं करोमीति कृतप्रतिज्ञो यः, स्वीकृतं नैव करोत्यसत्त्वः ।
यात्यस्य संस्पर्शजकश्मलानां, प्रक्षालनायेव रविः पयोधिम् ॥ ॥ २३ ॥
पल एवि महापुरिसा, पडिवन्नं अन्नहा न हु कुणन्ति ।

मृषावाद-
परिहारे
श्रीमान-
तुङ्ग—
मानवती-
चरित्रम् ॥

॥ ३४ ॥

गच्छन्ति न दिणत्तं, कुणंति न हु पत्थणाभंगं ॥ २४ ॥
तत्तिअ मित्तं जंपह, जत्तिअ मित्तस्स निक्कयं हवइ ।
तं उक्खिवेह भारं, जं अद्धपहे न छंडेइ ॥ २५ ॥

अस्य संपालना केचित्, सत्वरं मोक्षमाप्नुवत् । श्रुत्वैतन्मानतुङ्गोऽपि, प्रव्रज्यायै स्वमनो दधे ॥ ४६ ॥ राज्यं समर्प्य पुत्राय, मानवतीसखो नृपः । संसारासारतां ज्ञात्वा, प्राणमन्मुनिपादयोः ॥ ४७ ॥ दीक्षामादाय भूपालो–ऽभ्यस्यति विनयादिकम् । निरतिचारपूर्वकं, महाव्रतानि पालयन् ॥ ४८ ॥ मानतुङ्गमुनिश्रेष्ठ, उग्रश्च व्यहरत्तदा । क्रमेण द्वादशाङ्गस्य, सम्यग्ज्ञाता हि सोऽभवत् ॥ ४९ ॥ संयमं मानवत्यपि, वहति ज्ञानिनी सदा । महाव्रतेषु दोषश्च, कदाचिन्न प्रजायते ॥५०॥ शत्रुं मित्रेण जानाति, तुल्यं सदाऽन्यथा न हि । प्रफुल्लवदना नित्यं, संतुष्टा वर्तते तथा ॥ ५१ ॥ क्षान्तिशमदमादयः, संयमरागरंजिताः । जपतपःप्रयोगेण, गुरुमन्वसरत्सदा ॥ ५२ ॥ राजर्द्धिं गृहवासञ्च, स्वप्नेऽपि न व्यचारयत् । यथाहिः कञ्चुकीं त्यक्त्वा, कदा पुनर्न पश्यति ॥ ५३ ॥ मानतुङ्गऋषिश्चापि, साध्वी मानवती तथा । रुरुधतुश्च मोहादि, भव्याँश्च प्रत्यबुध्यताम् ॥ ५४ ॥ माससंलेखनां कृत्वा, सर्वार्थसिद्धमाप्नुताम् । आयुर्लब्धं त्रयस्त्रिंशत्–सागरोपममानकम् ॥ ५५ ॥ ततश्च्युत्वा जनिष्यतो, महाविदेहनीवृति । मनुष्यजन्म संप्राप्य, सुकृतानि करिष्यतः ॥ ५६ ॥ गृहिष्यतश्च तौ दीक्षां, केवलं प्राप्स्यतः शुभम् । अब्जं निर्मास्यति चेन्द्रो, लप्स्येते मोक्षमीप्सितम् ॥ ५७ ॥ मृषावादव्रतालम्भात्, पतिर्नम्रीकृतोऽनया ।

अष्टमः
सर्गः ॥

मिथ्यानेकवचो जातं, प्राप्तं शिवपदं तथा ॥ ५८ ॥ ऐहिकं पारलौकिकं, सुखं सम्यग् ददाति नः । व्रतं द्वितीयमेवेद-मतः श्रेष्ठतमं विदुः ॥ ५९ ॥ तस्य फलं हि तादृशं, स्वादयितुं यदीच्छथ । परिहर्तुं मृषावादं, कटिबद्धा भवन्तु भोः ! ॥ ६० ॥

त्रिनैन्दग्रहभूसंख्ये, वैक्रमीये सुवत्सरे । रचयामास पंन्यासो, गणीन्द्रास्तिलकाभिधः ॥

॥ इति मानवतीचरित्रे दम्पत्योश्चारित्रग्रहणसर्वार्थसिद्धगमननामा
अष्टमः सर्गः समाप्तः ॥

## श्रीमानतुङ्ग-मानवतीचरित्रं समाप्तम् ।

शास्त्रविशारद–जैनाचार्य–श्रीमद्–विजयधर्मसूरिभ्यो नमः ।

पण्डितश्रीमोहनविजयजीप्रणीतमानतुङ्ग–मानवती–रासानुसारेण कच्छ–वागडदेशोद्धारक–मुनिराजश्रीजीतविजयजी–पट्टधर–सुविहितमुनिराजश्रीहीरविजयजीशिष्यरत्न पंन्यास–श्रीतिलकविजयगणिवरविरचितम् ॥



# ॥ श्रीमानतुङ्ग–मानवतीचरित्रम् ॥

संशोधकः—कच्छ–वागडदेशोद्धारक मुनिराज श्रीजीतविजयजी–पट्टधर सुविहित मुनिराजश्री हीरविजयजी–पट्टधर मुनिराज श्रीबुद्धिविजयः



प्रकाशक–
मेसर्स ए. एम्. एन्ड कम्पनी. पालीताणा, काठियावाड.

मूल्यम्–रू. ०–१२–०.

मुद्रकः—शाह गुलाबचंद लल्लुभाई, श्री महोदय प्रिन्टींग प्रेस, दाणापीठ—भावनगर.

॥ ॐ अर्हम् ॥

# किञ्चित्प्रास्ताविकम् ।

अयि सुरभारतीप्रणयिनो मान्या विद्वांसः !

दुःखवारिपरिपूर्णे निःसारेऽस्मिन्प्रपञ्चनिलये चक्रवत् परिभ्रमतां जन्तूनां शाश्वतसमालम्बनदण्डभूतो मोक्षपथप्रदर्शको जैनधर्म इति नेदं श्रुतिपथवञ्चितं तत्रभवतां श्रीमताम् ।

उपायाः शिक्षमाणानां, बालानामुपलालनाः । असत्ये वर्त्मनि स्थित्वा, ततः सत्यं समीहते ।

इति हर्युक्त्यनुसारेण पण्डितप्रकाण्डः श्रीमान्मोहनविजयोऽसत्पथप्रवर्तनद्वारा सत्पथप्रापकं मानतुङ्ग–मानवत्याख्यं रासनामकं पुस्तकं विरचयामास । तत्प्रतिकृतिरूपं मानतुङ्गमानवतीचरित्रं सुकोमलसंस्कृतगिरा भव्यजनोपकृतये सुकुमारमतीनामल्पायासेन जैनधर्मतत्त्वसुविज्ञानाय च पंन्यासपदमधितिष्ठता श्रीमता परमकारुणिकेन गुरुकल्पश्रीतिलकविजयगणिवरेण निरमायीति । ॐ अर्हं शान्तिः ३ ।

विदुषां वशंवदः

निखिलसद्गुणगणालंकृत मुनिराज श्रीबुद्धिविजयजीमहाराज पट्टधरः

शान्तिविजयः

पंन्यासश्रीतिलकविजयगणिविरचितम् ।

# मृषावादपरिहारे श्रीमानतुङ्ग–मानवतीचरित्रम् ।

## प्रथमः सर्गः ॥

भूर्भुवःस्वस्त्रयीख्यात ! निर्गुण ! गुणसागर ! । स्वीकुरु मे नमस्कारा–ननादिपरमेश्वर ! ॥ १ ॥
द्विधाधर्मोपदेष्टारं, देवेन्द्रनतपत्कजम् । वन्देऽहं श्रीमहावीरं, वीरं कर्मारिसूदने ॥ २ ॥
नमामि भारतीं देवीं, सर्वतत्त्वार्थबोधिनीम् । शनीन्शुक्रीकरोति या, पादपङ्कजसेवनात् ॥ ३ ॥
अद्भुतदीपको गुरुः, करोति ज्ञानतेजसा । अज्ञानतमसां नाशं, सेवे तं नित्यशो मुदा ॥ ४ ॥
सर्वदेवान्नमस्कृत्य, मृषावादनिदर्शनम् । मानतुङ्ग–मानवतीचरित्रं, क्रियते देववाङ्मयम् ॥ ५ ॥

उक्तश्च सूक्तमुक्तावल्यां—

लिङ्गिनां परमाधारो, वेश्यानां परमो निधिः । वणिजां परमा नीवी, मृषावाद ! नमोऽस्तु ते ॥ १ ॥

पारदारिकचौराणा-मास्ति काचित् प्रतिक्रिया । असत्यवादिनः पुंसः, प्रतीकारो न विद्यते ॥ २ ॥

असत्यमप्रत्ययमूलकारणं, कुवासनासद्म समृद्धिवारणम् ।
विपन्निदानं परवञ्चनोर्जितं, कृतापराधं कृतिभिर्विवर्जितम् ॥ ३ ॥

साधुश्रावकयोर्धर्मो, द्विविधः प्रतिपादितः । पञ्चद्वादशमुख्यानि, व्रतानि विहितानि च ॥ ६ ॥ मृषावादव्रतं तेषु, द्वितीयं परिकीर्तितम् । आराधितेन तेनैव, जायते शिवसङ्गमः ॥ ७ ॥ व्रतेऽत्रादर्शरूपेण, मानतुङ्गस्य वल्लभा । जाता मानवती नाम्न्यु-ज्जयिनीवरमानिनी ॥ ८ ॥ अवाग्भरतखण्डस्य, नाम्ना देशोऽस्ति मालवः । अन्यदेशाहिमध्ये यो, मुख्यो मणिधरः स्मृतः ॥ ९ ॥ तत्रोज्जयिन्यपूर्वा पू-रिन्द्रपूरिव शोभना । यल्लज्जया समुद्रान्त-र्निमग्नं लंकया पुरा ॥ १० ॥ स्फटिकरत्न-निर्माणं, गृहाणां यत्र विद्यते । येषामुच्चतमप्रस्थैः, श्लिष्टं गगनमण्डलम् ॥ ११ ॥ तां परितो महावप्रो, दृश्यते त्वष्टृनिर्मितः । सीमन्तिनीं यथा पट्टो[1], वृत[2] आह्लाददायकः ॥ १२ ॥ प्रत्यापणं बहुक्रय्यं, मार्गे पङ्कश्च कौङ्कमः । तुन्दिला व्यवहारिणः, प्रफुल्लानन-पङ्कजाः ॥१३॥ मानोत्तुङ्गा विलासिन्य-श्चन्द्रमुख्यश्चलन्ति हि । यासां नूपुरझाङ्कारैः, कृष्टं दिविपदां मनः ॥ १४ ॥ हयरथगजानीक-युक्तराज्याश्रमे मुनिः । रूपनिर्जितकामश्च, राजकार्यविचक्षणः ॥ १५ ॥ मानतुङ्गनृपस्तत्र, चारु राज्यम-पालयत् । भूमी राजन्वती येन, यथेन्द्रेणामरावनिः ॥ युग्मम् ॥ १६ ॥ वाङ्मनोदेहशुद्धोऽसौ, भीतित्रासितशात्रवः । सन्नृणा-

१ पट्टो—वस्त्रविशेषः । २ वृतो—वर्तुलः ।

माश्रयायाभूद्, दुर्जनानां भयाय च ॥ १७ ॥
उक्तञ्च सूक्तमुक्तावल्याँ—

दुष्टस्य दण्डः सुजनस्य पूजा, न्यायेन कोशस्य च संप्रवृद्धिः ।
अपक्षपातो रिपुराष्ट्ररक्षा, पञ्चैव यज्ञाः कथिता नृपाणाम् ॥ ४ ॥
दुष्टानां दमनं नयानुगमनं स्वीयप्रजापालनं,
नित्यं देवमहर्षिपादनमनं षड्दर्शनीमाननम् ।
औचित्याचरणं परोपकरणं त्यागं सुभोगं श्रियां,
कुर्वाणो नृपतिः श्रिया निजपतिः सत्येव नो मुच्यते ॥ ५ ॥
यस्तेजस्वी यशस्वी शरणगतजनत्राणकर्मप्रवीणः,
शास्ता शश्वत्खलानां क्षतरिपुनिवहः पालकः स्वप्रजानाम् ।
दाता भोक्ता विवेकी नयपथपथिकः सुप्रतिज्ञः कृतज्ञः,
प्राज्यं राज्यं स राजा प्रथयति पृथिवीमण्डलेऽखण्डिताज्ञः ॥ ६ ॥

षोडशविषयं भुञ्जन्, तदासीदेकभूपतिः । चार्वङ्ग्यास्तस्य बालाया-श्चक्रेऽसौ पाणिपीडनम् ॥ १८ ॥ चन्द्रः सर्वकला-युक्तो, यथा स्यात्पूर्णिमादिने । अयम्भूपस्तया देव्या, सर्वदा पूर्णचन्द्रमाः ॥ १९ ॥ महामात्यः सुबुद्धिः स, प्रौढधीर्नीति-विद्वरः । सार्थकीकृतसंज्ञश्च, प्रज्ञानिर्जितगीष्पतिः ॥ २० ॥ अन्यैश्चानेकसन्मित्रैः, सहितो धर्मतत्परः । पालयति प्रजां राजा, कुनीतितः पराङ्मुखः ॥ २१ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा, न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ७ ॥

दुःखं वरं चैव वरं च भैक्ष्यं, वरं च मौर्ख्यं हि वरं रुजोऽपि ।
मृत्युः प्रवासोऽपि वरं नराणाम्, परं सदाचारविलङ्घनं नो ॥ ८ ॥

सदाचारस्य धीरस्य, धीमतो दीर्घदर्शिनः । न्यायप्रवृत्तिशीलस्य, सन्तु वा यान्तु वा श्रियः ॥ ९ ॥

मूर्धदत्तकरद्वन्द्व-सेवकाकीर्णभूतले । नाट्यगानप्रकुर्वाण-नटगायकसंकुले ॥ २२ ॥ क्रियमाणयशोगान-नादपूरितदिङ्-मुखे । स्थितः सदोगृहे राजा, सभासद्युक्त एकदा ॥ युग्मम् ॥ २३ ॥ प्राचीवधूतिरस्कार-क्रुद्धस्तरण्यँस्ततः । रक्तीभूय

प्रतीचीं स, सादरं संश्रितो यदा ॥ २४ ॥ झांकारैर्झल्लरीणां च, शङ्खैश्च मेघगर्जनैः। हयगजररथागत्या, प्रतिगेहं च शिञ्जितम् ॥ २५ ॥ पद्मिन्यश्चञ्चला जाता, अलङ्कारप्रसाधने। स्वैरिण्यस्तस्कराश्चाऽपि, गुप्तमार्गं व्यलोकयन् ॥ २६ ॥ दीपज्योतिः प्रतिस्थानं, जातं शोभाविवर्धने। पूरम्बकानि निर्माय, पश्यतीव नृपाननम् ॥ २७ ॥ एकयामो गतो रात्र्याः, सभां तदा विसृज्य सः। बोद्धुं नगरवृत्तान्तं, संकल्पं मनसि व्यधात् ॥ २८ ॥ मयि प्रजाजनप्रेम, कीदृगिति दिदृक्षया। कुतूहलसमाकीर्ण, उत्थितश्च ततो नृपः ॥ २९ ॥ फुल्लाननोऽसिसाहाय्यो, नीलवासाः प्रशान्तधीः। अभवन्मौनधारी च, व्रतीव वृत्तलब्धये ॥ ३० ॥ यशोगानानि शृण्वन् स, व्रजन्नेकः पथि प्रधीः। अगण्यहट्टानुल्लङ्घ्य, प्रतोलीषु विवेश वै ॥ ३१ ॥ पौरा वदन्ति राजाऽय-मनुपमगुणाकरः। सत्यतायां हरिश्चन्द्रो, बली भीम इवापरः ॥ ३२ ॥ रामराज्यमिवेयं पू-श्चौरादिभिर्विवर्जिता। वायवोऽपि तृणादानं, नेच्छन्ति प्राणिनः किमु ॥ ३३ ॥ प्रजाभ्यो नाददे दण्डं, स तु देवालये स्थितः। प्राणिनो बन्धनं मुक्त्वा, स्त्रीणां धम्मिल्लके स्थितम् ॥ ३४ ॥ ताडनं घंटिकायाश्च, व्यभिचारस्तु कोपगः। ईतयो देशपारे च, लोका धर्मक्रियारताः ॥ ३५ ॥ गुणपूरितभूपोऽसौ, कलिर्न तं समाश्रितः। विपक्षभावमाश्रित्य, विपक्षहृदि संस्थितः ॥ ३६ ॥ चिरजीवी नृपो भूया-दुष्णवायुर्न जायताम्। लवणाब्धौ निमज्जन्तु, तस्याधिव्याधयः समे ॥ ३७ ॥ प्रभो ! मनोरथास्तस्य, पूर्याः सर्वान् समीहितान्। शत्रुपराभवायाल-मस्माकं जायतां नृपः ॥ ३८ ॥ गुणग्रामेण संयुक्तं, दधतां च यशःपटम्। कृत्रिमैः सूत्रपट्टैः किम्, तादृशां हि महात्मनाम् ? ॥ ३९ ॥ इत्थं प्रजाननेभ्यः स्वं, यशः श्रुत्वा सुविस्तृतम्। प्रसन्नवदनः सोऽभूत्, वारिदेनेव भूरुहः ॥ ४० ॥ धन्या धन्या प्रजा मे हि, यस्याः प्रेम

मयीदृशम् । शुभं वाञ्छति सर्वाऽपि, धन्योऽस्मि भुवि खल्वहम् ॥ ४१ ॥

उक्तश्च सूक्तमुक्तावल्यां—

लक्ष्मीर्विवेकेन मतिः श्रुतेन, शक्तिः शमेन प्रभुता नयेन ।
श्रद्धा च धर्मेण समं समेत्य, धन्यस्य पुंसः सफलीभवन्ति ॥ १० ॥

गच्छन्नृपतिरग्रस्त-श्चैकं पश्यति कौतुकम् । कन्याः पञ्च सुमिल्य, क्रीडन्ति हर्षनिर्भराः ॥ ४२ ॥ स्पर्धया रूपमाप्तुद्धं, मिथो गुणा अनेकशः । मोहयन्त्यः सुरान्नृंश्च, सवयसः शुभाशयाः ॥ ४३ ॥ धृतं पीताम्बरं ताभि-रलङ्काराँश्च षोडश । मानवत्यादयस्ता हि, मानवत्यः स्वभावतः ॥ ४४ ॥ कुब्जीभूय महीपः स, कन्याकेलिं ददर्श हि । शिशुसमा हि राजान-स्तथ्यं सुमहतां वचः ॥ ४५ ॥ घुर्घुराबद्धपादास्ताः, स्फुरद्वस्त्रविभूषिताः । मुक्तपाशा अशोभन्त, शिरःस्थितोरगा यथा ॥ ४६ ॥ पङ्केरुहपाणयस्ता, धावन्ति स्म द्रुतं द्रुतम् । स्रवत्दानोद्धतेभेन्द्रा, यथा त्यक्तस्वबन्धनाः ॥ ४७ ॥ क्षणं पादौ च सम्मेल्य, मिथो गृह्णन्ति हस्तकान् । मदोद्धता हि कुर्वन्ति, भ्रमणं भावतश्चिरम् ॥ ४८ ॥ सुवर्णचूडिकानाश्च, किरणाः प्रस्फुरन्ति रवे । तदा वृक्षस्थिता दिव्याः, खद्योता लज्जिताः परम् ॥ ४९ ॥ नूपुरनादपूर्वं ता, गानं गायन्ति सुन्दरम् । आकर्ण्य कोकिलाश्चेदं, ह्रिया शान्तिमगुस्तदा ॥ ५० ॥ मिथो ददति तालं च, हास्यं कुर्वन्ति सर्वदा । शीघ्रभ्रमणवशात्तासां, हारा भान्ति प्रदीपवत् ॥ ५१ ॥ राजा विस्मयमापन्ने-क्षमाणश्च कुतूहलम् । विचारयति हृद्येव-मागताः किमु देवताः ? ॥ ५२ ॥

अथवाप्सरसः स्वर्गात्, क्रीडार्थमत्र संस्थिताः । आह्लादयन्ति चित्तं ताः, समेषां पश्यतां नृणाम् ॥ ५३ ॥ नृत्यन्तीस्ता विलोक्यैवं, जिह्रियत्युर्वशीमुखाः । ततोऽधुना न दृश्यन्ते, क्षमास्थप्राणिभिः ननु ॥ ५४ ॥ कृतार्थोऽद्याभवम् तासां, दर्शनेनोपकारिणा । अमृतस्राविगीतेन, मुग्धोऽस्मि नात्र संशयः ॥ ५५ ॥ बालिकानामिदं रूपं, कथं स्रष्टाऽकरोदिति । विचार्य गुप्तमागच्छत्, कुमारीणाञ्च सन्निधिम् ॥ ५६ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

यन्मनोरथशतैरगोचरं, यत्स्पृशन्ति न गिरः कवेरपि ।
स्वप्नवृत्तिरपि यत्र दुर्लभा, लीलयैव विदधाति तद्विधिः ॥ ११ ॥

क्रीडाश्रमपरिश्रान्ता, बालिकाः श्वासनिर्भराः । कटेषु रक्ततायुक्ता, एकत्र स्थितिमादधुः ॥ ५७ ॥ धनदत्तस्य कन्या या, नाम्ना मानवती सती । सर्वमध्यस्थितत्वात्सा, भाति देवीव प्रीतिदा ॥ ५८ ॥ रोहिणीव स्फुरत्कान्ति, कनीनां पञ्चकं मिथः । चकारान्तर्गतां वार्तां, निर्जिह्महास्यसंयुतम् ॥ ५९ ॥ पश्यन्नृपः श्रृणोति स्म, तद्वार्तां हृदयङ्गमाम् । मुरलीस्वरलुब्धोऽहि–रिव स्तब्धोऽभवत्तदा ॥ ६० ॥ प्रोचुः कन्याश्चतस्रो रे–मानवति ! श्रृणु ह्यदः । मानत्यागं प्रकुर्वाणा, क्रीडनायोद्यता भव ॥ ६१ ॥ विलम्बं मा कृथाः खेले, सज्जा भव जवाद्यतः । निःशेषं खेलयित्वा हि, वयं यामः कृतार्थताम् ॥ ६२ ॥ अल्पार्थं बहुकार्यं, न त्यक्तव्यं शान्तिमिच्छता । खेलन्त्यो रजनीमल्पां, स्वेच्छया व्यत्यगाम तत् ॥ ६३ ॥ रात्रिः स्वप्नसमा याति, मानं मानिनि ! मुञ्च रे । विश्राम्य श्रमखेदं च, खेलनायोद्यता भव ॥ ६४ ॥ क्रीडारसं न बाल्ये या, निर्विक्ष्यति यथातथम् । पश्चात्किं ज्ञास्यति

प्रौढा, पतिवशंवदा हि सा ॥६५॥ सखीभिः कथिता सैव–मुवाच मानवत्यपरम्। कदाग्रहं कथं सख्यः ! समाचरन्ति दुःखदम् ॥ ६६ ॥ अनेन क्रीडनेनालमु–ज्जागरणकारिणा। स्यादल्पमेव सुखादं, कृपां कुरुत मय्यलम् ॥६७॥ विन्दव एव रङ्गस्य, न च कुण्डान्यनेकशः। अतः कदाग्रहं त्यक्त्वा, गच्छत सत्वरं गृहम् ॥ ६८॥ खेलिष्यामो वयं किञ्च, श्वोऽत्र नानाप्रकारतः। निद्रामनुभवामोऽद्य, हरण्यस्तं गता यतः ॥६९॥ निद्रासक्तमनुष्याणा–मन्यथा गीतसुस्वराः। कर्णेजपा भविष्यन्ति, जागरिष्यन्ति वा जनाः ॥७०॥ अतिक्लेशकृते कार्ये, लाभः को नश्च जायते। अतः कल्ये समागत्य, क्रीडिष्यामो निजेच्छया ॥७१॥ सहचर्यश्चतस्रस्ता, ऊचुर्मानवतीं प्रति। धत्से सखि ! कथां नो त्व–मस्माकं हृदये कदा ॥७२॥ कालक्रमेण ताता नः, करिष्यन्ति महोत्सवम्। वरैश्च पञ्चभिः साकं, भावि च करपीडनम् ॥ ७३ ॥ अनुलग्नं कृत्वा पतिस्थान–मलङ्कार्यं सहर्षतः। श्वसुरज्येष्ठमुख्यानां, कर्तव्यो विनयः सदा ॥ ७४ ॥ कर्तव्यं गृहकार्यं च, निर्वृतिः स्यात्कदा न हि। अनुकूलं समैः साकं, वर्तनीयं हि सुन्दरि ! ॥ ७५ ॥ बालसखीवियोगश्च, सर्वासां दुःसहस्तदा। पाल्याः कुलवधूधर्माः, पातिव्रत्यं तथापरम् ॥ ७६ ॥ अवगुण्ठनतो गोप्यं, मुखं वचसि मन्दता। दृष्टेर्मोच्यो न भर्ता च, पञ्जरवद्धकीरवत् ॥७७॥ तद्धे सखि ! रमस्वाद्य, मनः प्रसन्नतां नय। स्वीकार्यं सादरं वाक्यं, सहचरीसुभाषितम् ॥ ७८ ॥ गलद्रवी कथं जाता, शीघ्रमुत्तिष्ठ मानिनि !। एवं संमील्य पश्चात्क, रंस्यामहे कदा वयम् ॥ ७९ ॥ स्मरामः सर्वदा वाणीं, मिष्टां तव प्रिये सखि !। प्रभुस्तव वियोगो मा, कार्षीत् कदापि दीनपः ॥ ८० ॥ तदा प्रत्युत्तरं प्रादान्, मानवती मदोद्धतम्। पतिवश्या यदि स्यात, युष्माकं जन्म धिक् तदा ॥ ८१ ॥ करग्रहः प्रमाणं स्याद्वशवर्ती पतिर्यदि। अन्यथा दासवद्वृत्तिः, पालनीया भवेत्सदा ॥ ८२ ॥ सुन्दर्यग्रे शूरता ना,

किं मात्रं तस्य पौरुषं ? । वशीभवेद्यथा बद्धो, नाथनया बली वृषः ॥ ८३ ॥ केऽपि नारीचरित्रज्ञा, न सन्ति देवदानवाः ।
स्रष्टाऽपि तद्विचारे हि, युगानां कोटिमत्यगात् ॥ ८४ ॥
उक्तञ्च सूक्तमुक्तावल्यां—

तावदेव कृतिनामपि स्फुर–त्येष निर्मलविवेकदीपकः ।
यावदत्र न कुरङ्गचक्षुषा, ताड्यते चटुललोचनाञ्चलैः ॥ १२ ॥
सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेन्द्रियाणां,
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते,
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥ १३ ॥
उन्मत्तप्रेमसंरम्भादारभन्ते यदङ्गनाः ।
तत्र प्रत्यूहमाधातुं ब्रह्माऽपि खलु कातरः ॥ १४ ॥
गङ्गाइ वालुअं सायरे जलं हिमवओ अ परिमाणम् ।

## जाणंति बुद्धिमंता माहिलाहिअयं न याणन्ति ॥ १५ ॥

श्रुत्वा मानवतीवाणीं, चतस्रश्चलितास्तदा । प्रत्यूचुश्च प्रियां वाणीं, हितांश्च समयोचिताम् ॥८५॥ वक्तव्या मधुरा भाषा, या च हितकारी भवेत् । सन्मान्या च समैर्यास्यात्, न स्यान्निजविमानता ॥ ८६ ॥ नराग्रे सुन्दरीणां च, न प्रमाणं मनागपि । उपानद्रत्नसम्बद्धाऽपि, स्यात्पादस्य रक्षिका ॥८७॥ कालागुरुः सुगन्धाऽपि, निक्षिप्यते हि पावके । तटिनी विषमापि स्यात्सरला सा सागरे सदा ॥ ८८ ॥ कदापि न प्रतार्यः स्यात्पतिः पतिव्रतस्त्रिया । पथा दिष्टेन संचर्यं, पेयं च चरणोदकम् ॥८९॥ स्वामिना यत् समादिष्टं, कर्तव्यं जायया सदा । मिष्टभाषणपूर्वं तं, भोजयित्वा च भोजनम् ॥ ९० ॥ श्रृङ्गारहास्यगीतेन, रंजयित्वा सुसेवया । पतिः प्रसादनीयः स्यात्, सुन्दरीभिश्च सर्वदा ॥ ९१ ॥ प्राणेशे जिह्मवृत्तिः स्यात्पापकर्मप्रवर्धिनी । सरलाभिरतो भाव्यं, पत्नीभिः पतिसङ्गमे ॥९२॥ अञ्चलबन्धनं येन, तेनैव कपटः कथम् ? । वैनतेयजवाग्रे हि, चल्ली किमग्रगामिनी ? ॥९३॥ इत्थं सखीवचोजातैः, क्रोधाद्गर्जितवत्यसौ । सभ्रूभङ्गमुवाचेति, निषिदन्तु वचो विना ॥९४॥ वशीकरणयन्त्राणि, नार्यस्तन्निर्विवादकम् । तत्कटाक्षविलासाग्रे, नराः पाषाणमूर्तयः ॥९५॥ नारीभिश्छलिता नैके, तद्वार्ताधुनिकी नहि । नृदेवदानवेन्द्राश्च, स्त्रीपादप्रणताः खलु ॥ ९६ ॥ अपर्णयेश्वरोऽनाटि, सुरेशोऽहल्यया तथा । गोपीभिर्गोपपोऽनाटि, मुनयोऽप्सरसां गणैः ॥ ९७ ॥ स्वामी सेवक एव, स्याद्युवतिर्बलिनी यदि । या च वशंवदा नारी, तस्या जन्म निरर्थकम् ॥ ९८ ॥

---

१ मधुरां वाचं । २ पथ्यकरी । ३ पथ्या ।



॥ ५ ॥

उक्तञ्च शृङ्गारमुक्तावल्याम्—

कुङ्कुमपङ्ककलङ्कितदेहा, गौरपयोधरकम्पितहारा ।
नूपुरहंसरणत्पदपद्मा, कं न वशं कुरुते भुवि रामा ? ॥ १६ ॥
संमोहयन्ति मदयन्ति विडम्बयन्ति, निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।
एताः प्रविश्य सदयं हृदयं नराणां, किन्नाम वामनयना न समाचरन्ति ॥ १७ ॥
पञ्चाननं परिभवत्युदरेण वेणीदण्डेन कुण्डलिकुलं शशिनं मुखेन ।
या सा जगत्रयजयप्रथिता नताङ्गी बुद्ध्या कया बत बुधैरबला बभाषे ? ॥ १८ ॥

सुवंशजोऽप्यकृत्यानि कुरुते प्रेरितः स्त्रिया। स्नेहलं दधि मथ्नाति पश्य मन्थानरो न किम् ?॥१९॥
गृहीतहस्तकः प्रेयान् प्रेयसीभिर्घरट्टवत् । भ्रमितः पितृमात्रादि—स्नेहं दलयति क्षणात् ॥ २० ॥

सख्यो मानवतीं प्रोचु—र्यदा परिणयेः सखि ! । तदा पतिर्वशं नेयो, वार्तालापेन किं भवेत् ? ॥९९॥ मानवती तदोवाच, यदि परिणयाम्यहम् । उच्छिष्टान्नं प्रदास्यामि, पास्यामि चरणोदकम् ॥ १०० ॥ कारयिष्यामि रक्षां च, पादपीडनमित्यपि । नयेयं वशतामित्थं, तदास्मि मानवत्यहम् ॥ १०१ ॥ सख्य ऊचुर्वचोयुद्धे, वयं त्वया पराजिताः । इत्युक्त्वोत्थाय ताः,

सर्वा जग्मुः स्वं स्वं निकेतनम् ॥ १०२ ॥ जातबालावचः श्रुत्यन्तः, कम्पश्चिन्तयत्यसौ । रूपमस्या मनोहारि, किन्त्वन्त-र्वज्रनिर्मितम् ॥ १०३ ॥ स्तन्यफेनमुखी किन्तु, साब्धितरणमिच्छति । तथा च पुष्करस्पर्शमपीत्याश्चर्यमीश्वर ! ॥ १०४ ॥ चिन्तिता पञ्चसु श्रेष्ठा, सरूपेति निदानतः । विना गुणं वृथा रूपं, शून्यं संख्यां विना यथा ॥ १०५ ॥ एकैकत्रुटियुक्तानि, रत्नानि निर्मितानि वै । सक्षारो जलधिः सूर्या–चन्द्रौ तापकलङ्कितौ ॥ १०६ ॥ तात तातेति सम्बुद्ध्य, कस्य हर्षाय जायते । तथा चास्या निवासेन, पुण्यं पश्यानि किं गृहम् ॥ १०७ ॥ परिणेया बलेनापि, सा मदोद्धतमानिनी । पश्चात्कथं वशं कुर्यात्पश्यामि तत्परीक्षणम् ॥ १०८ ॥ तद्वचनं वृथा कुर्यां, तदा राजाऽन्यथा न हि । इति विचार्य भूपालः, पश्चात्तस्या गृहं ययौ ॥ १०९ ॥ सा जगाम गृहं स्वीयं, नेक्षितो धरणीधवः । शय्यान्तर्लीनगात्री, चिरं रेमे सनिद्रया ॥ ११० ॥ गेहाङ्गनं सुरभिपादपचम्पकाङ्कम्, ताम्बूलरागमपरं च निजोज्झितं वै । चिह्नं निधाय हृदये परिशुद्धिहेतोः, आगत्य सौधमतिखिन्न मनाः स शिश्ये ॥ १११ ॥

इति मानवतीचरित्रे बाल्यक्रीडननामा प्रथमः सर्गः ।

---

# द्वितीयः सर्गः ।

तद्दुःखव्यथितात्मा स, निद्रया परिवञ्चितः । प्रतिक्षणं च सस्मार, मानवतीवचोगणम् ॥१॥ करग्रहातुरो जात-स्तद्रूपाकृष्टचेतनः । प्रतीक्षते दिवानाथं, धैर्यहीनो नरेश्वरः ॥२॥ यदाऽनूरुः समागत्य, तमो निरस्यति स्म च । सूर्यो रथं समारुह्य, प्रदिदीपेऽवनीं वनीम् ॥ ३ ॥ राजा शय्यां परित्यज्य, नित्यकार्यान्निवृत्य च । गतः परिषदं शीघ्रं, वृत्तदानाय मन्त्रिणे ॥ ४ ॥ आहूय सचिवं सद्यः, सादरं बहुमानितः । कथयामास वृत्तान्तं, रात्रौ तेन यथाश्रुतम् ॥ ५ ॥ पुरो वार्तां सुविज्ञातुं, गत आसं विभावरीम् । एकत्र कन्यकाः पञ्च, दृष्टाः क्रीडन्ति चत्वरे ॥६॥ तासामेकातिजल्पाका, तिक्तवाचं ततान सा । तच्छ्रवणेन क्रुद्धोऽह-मुत्सहे गर्वनाशनम् ॥ ७ ॥ ततस्तया सहोद्वाहः, कर्तव्य इति चिन्तया । निद्राऽपि नागता रात्रौ, प्रतीकारं विनास्य ॥८॥ परिदृश्य गृहं तस्या-स्ताम्बूलरागचिह्नितम् । बहिश्चम्पकवृक्षाङ्कं, गच्छेस्त्वं तत्र सत्वरम् ॥ ९ ॥ कथमपि पिता तस्या, वशीकार्यश्छलेन वा । याचनीयः कुमार्यर्थमुपायश्च वितन्वता ॥१०॥ मदर्थं विनतिं कुर्याः, स्मराम्युपकृतिं तव । आजीवनं स्मरिष्यामि, गुणग्रामं तवानघ ! ॥११॥ कन्यया सह वाग्वैरं, नास्त्यपरं मनागपि । तव बुद्धिप्रभावेन, भवेल्लग्नं तदा खलु ॥१२॥ वक्ति स्म सचिवश्चेत्थं, कारयामि तव क्रियाम् । आनयामि तवाज्ञा चेत्, शचीमपि प्रसादतः ॥१३॥ सत्योऽस्मि सेवको नाऽहं, यावल्लग्नं न जायते । आश्वास्येत्थं प्रधानोऽसा-वुत्थितः कार्यसिद्धये ॥ १४ ॥ पश्यन्प्रतिगृहं पुर्यां, प्रविष्टोऽयं

विचक्षणः । अभिमानं दधत् कार्य-दक्षतायाः प्रतिक्षणम् ॥ १५ ॥ एवं परिभ्रमन्नन्ते, दृष्ट्वा चम्पकवृक्षकम् । ताम्बूलरागचिह्नं च, जहर्ष सचिवाग्रणीः ॥१६॥ एष चिह्नांकितं गेहं, प्रविष्टः सेवकान्वितः । प्रधानागमनं दृष्ट्वा, धनदत्तो व्यचिन्तयत् ॥१७॥ धवधवेत्युदतिष्ठत्, शरीरे वेपथुर्महान् । पतन्तं वस्त्रमाधाय, सन्मुखं गतवान्सुधीः ॥१८॥ आनीय गृहमध्ये तमा-सनादि प्रदत्तवान् । ताम्बूलं मुखावासार्थं, बद्धाञ्जलिश्च तस्थिवान् ॥ १९ ॥ दर्शनेन कृतीजातो, यथा गङ्गानिमज्जनात् । कृतिनं कुरु भूयो मां, तथा कार्यप्रदर्शनात् ॥२०॥ इत्यादि मधुरालापै-र्ज्ञात्वा सन्मानदक्षताम् । उवाच सचिवस्तुष्टस्तथ्यमागमकारणम् ॥ २१ ॥ नृपस्य महती प्रीति-र्वर्धतेऽनुदिनं त्वयि । अनुभूतं समागत्य, यथाश्रुतं तथा त्वयि ॥ २२ ॥ अमात्यः श्रेष्ठिनं प्राह, वाणिज्यं कीदृशं तव । तथा संततिसौख्यं च, पृष्टः सन्नित्युवाच सः ॥२३॥ प्रवहणैर्विदेशेभ्यो, यातायाते हि मे खलु । संतत्यां बलिकारत्नं, नाम्ना मानवती ध्रुवम् ॥२४॥ सुतास्ति कुत्र सोवाच, सचिवः श्रेष्ठिनं प्रति । आलोकयामि येना-हमाह्वय सत्वरं ततः ॥ २५ ॥ अध्येतुं सा गता शाला-मुक्तवानिति श्रेष्ठिराट् । भोक्तुकामा पराह्णे च, ततः पश्चान्निवर्त्स्यति ॥२६॥ पुत्रिका भवतां गुण्या, कस्मिन्साधीतिनी वद । जैनधर्मे हि श्राद्धानाम-धीत इत्युवाच सः ॥२७॥ रहस्यं तव धर्मस्य, ज्ञापयेभ्य ! यथास्थितम् । येनाहमपि जानीयां, सिद्धान्ताञ्जैनधर्मगान् ॥२८॥ जीवदयाऽत्र मुख्या स्याद्, पीडयामो न प्राणिनम् । जलं व्यवहरामश्च, निगाल्यैव वयं सदा ॥२९॥ नमस्कारस्य मन्त्राणि, जपामो दृढचेतसा । तेनैव मोक्षसंप्राप्ता, अनेके नृदिवीश्वराः ॥३०॥ शास्त्राणि साक्षिरूपाणि, प्रणीतानि जिनेश्वरैः । श्रद्धास्माकं दृढा तेषु, तत्कर्तृषु विशेषतः ॥३१॥ जिनेशतारकाणाञ्च, पादसेवां विदध्महे । येन कर्माणि दूरं स्युः, शिवस्थानं च हस्तगम् ॥३२॥ त्यक्तकञ्चनकामिन्यो, मुनयो गुरवश्च स्युः । तेषां पवित्रव्या-

ख्यानं, नित्यशः श्रुणुमो वयम् ॥३३॥ प्रतिमा मन्दिरं शास्त्रं, जैनसङ्घश्चतुर्विधः। तेषु सप्तसु मार्गेषु, दानं दद्मो यथोचितम् ॥३४॥ व्रतपौषधमित्यादि, प्रत्याख्यानप्रतिक्रमौ। संसारासारतां ज्ञात्वा, कुर्मो विधिविधानतः ॥३५॥ स्वकीयो यादृशो जीवः, परकीयोऽपि तादृशः। द्वादशव्रतधर्तृणा-मस्माकं तादृशो नयः ॥३६॥ कदापि परनिन्दायां, कालव्यत्ययनं न हि। मृषावादं त्यजामश्च, नागादि पूज्यते न हि ॥३७॥ जीवबन्धवधौ दृष्ट्वा, वेपथुर्जायते हृदि। अतो गहनभेदानां, न वेत्ता ज्ञानिना विना ॥ ३८ ॥ विना ज्ञानेन तत्त्वस्य, परधर्मा वदन्ति यत्। श्रेष्ठोऽस्माकं मतो नान्यो-ऽन्धस्येव गजदर्शनम् ॥ ३९ ॥

उक्तश्च सूक्तमुक्तावल्यां—

श्रद्धालुतां श्राति जिनेन्द्रशासने धनानि क्षेत्रेषु वपत्यनारतम्।
करोति पुण्यानि सुसाधुसेवनादतोऽपि तं श्रावकमाहुरुत्तमाः ॥ १ ॥
महुमज्जमंसभेसज्जमूलसत्थग्गिजंतमंताइ।
न कयावि हु कायव्वं सड्ढेहि वि पावभीरूहिं ॥ २ ॥
गुरुभणिओ सुत्तत्थो बिंबिज्जइ अवितहो मणे जस्स।
सो आयंससमाणो सुसावओ देसिओ समए ॥ ३ ॥

धनदत्तवचः श्रुत्वा, प्रधानो हर्षनिर्भरः । उवाच वचनं चेदं, धन्यो धर्मस्तवाऽनघ ! ॥४०॥ रमझमनदन्ती सा, मानवत्यागता तदा । सप्रश्रयं प्रणम्याथ, पित्रङ्के निषसाद च ॥ ४१ ॥ लावण्यतां तदीयां स, दृष्ट्वा चिन्तयति प्रधीः । स्थाने भूपालरागोऽत्र, रूपराशिशुभाश्रये ॥ ४२ ॥ इभ्यं प्रति प्रधानः स, प्रोवाच मधुरं वचः । स्वीक्रियेथा यदि ब्रूवे, मदीयागमनकारणम् ॥ ४३ ॥ प्रत्युवाच धनश्रेष्ठी, वद वाक्यं मनोगतम् । सेवकोऽयं यथाशक्ति, स्वामिकार्यं करिष्यति ॥४४॥ त्वं कार्यं दर्शयेरित्थं, क्व मे भाग्यमतो वद । न परिवेषयेन्माता, कदापि कथनं विना ॥४५॥ तदा प्रयोजनं प्रोचे, दृष्ट्वा श्रेष्ठिशुभादरम् । कन्याया रूपमालोक्य, राजा रागी बभूव हि ॥४६॥ तस्या उद्वाहनार्थं मां, प्रेषितोऽत्र नृपेण नु । स्वीकार्येदं वचः श्रेष्ठिन् !, विसर्जय प्रसाद्य माम् ॥४७॥ जामाता यदि राजा स्या—न्न क्षतिस्तव विद्यते । सुखिनी बालिकाऽपि स्या—न्न भवेद्दुःखिनी कदा ॥ ४८ ॥ गतो नु समयो नायात्, प्रीतिर्न जायते गता । नोल्लङ्घ्योऽतः क्षमापालो, राजाग्रहो हि दुःखदः ॥ ४९ ॥ उक्तञ्च सूक्तमुक्तावल्यां—

अतिथिर्बालकश्चैव, राजा भार्या तथैव च ।
अस्ति नास्ति न जानन्ति, देहि देहि पुनः पुनः ॥ ४ ॥

अतः प्रसन्नचित्तेन, बाढमिति वचो वद । अन्यथा नृपतिः क्रुद्ध, आपदः पातयिष्यति ॥ ५० ॥ धनदत्तो जगादैवं, भीतिं नो देहि तादृशीम् । नृपवचः सदा मान्यं, सज्जा कन्या हि सर्वदा ॥५१॥ गत्वा कथय राज्ञे त्वं, मुहूर्तं च विशोधय ।

इति श्रुत्वा गतोऽमात्यः, समाचारनिवेदने ॥ ५२ ॥ राजा वर्धापनां श्रुत्वा, मन्त्रिणो हृदयंगमाम् । ज्योतिषिणं समाहूय, मुहूर्त्तं पृच्छति स्म सः ॥५३॥ निर्दोषं दिनमावेद्य, हर्षं नीतो नृपोत्तमः । राजा दानेन संतोष्य, दैवज्ञं च व्यसर्जयत् ॥५४॥ उद्धता हर्षकल्लोला, नृपहृदि ममुर्न ते । उत्सवादिकरूपेण, निःससार बहिस्तदा ॥ ५५ ॥ नृपादेशेन भृत्यैर्भूः, सिक्ता निर्मलवारिभिः । पुरं शृंगारितं सम्यग्, धूपः कालागुरोः कृतः ॥ ५६ ॥ पताकातोरणानां च, लम्बन्ते पङ्क्तयोऽम्बरे । यथा घनघटाकाले, नृत्यन्ति केकिनः शुभम् ॥५७॥ समृगमदवासांसि, परिमलं स्रवन्ति हि । प्रतिगृहं मृदङ्गानां, मङ्गलध्वनिनाथितम् ॥ ५८ ॥ धनदत्तोऽपि हृष्टः सन्, भृङ्गारयति मन्दिरम् । शिबिकादीनि यानानि, सज्जितानि च तेन वै ॥ ५९ ॥ परिवारसमायुक्तः, सभेरीनादमोहितः । यानं प्रयोज्य भूपालः, सहर्षः संचचाल च ॥ ६० ॥ निजशिरोधृतछत्रैश्चामरग्रेरकैरपि । स्रवन्मदगजारूढै-र्हयारूढैश्च संवृतः ॥ ६१ ॥ सनारिकेलपाणिश्च, साक्षातकुङ्कुमार्चितः । आडम्बरयुतः प्राप, धनदत्तनिकेतनम् ॥ ६२ ॥ युग्मम् ॥ मुक्ताभिरवकीर्येमं, तोरणाधः स्थितं वरम् । विभाज्य सम्पुटं पश्चान्मण्डपं प्रत्यवेशयत् ॥ ६३ ॥ विष्टरार्घ्ये च पाद्यश्च, क्रमेण दत्तवान् धनः । कन्याञ्च स्थापयामास, मङ्गलध्वन्यनन्तरम् ॥६४॥ कामबध्वा काम इव, शच्येवेन्द्रो यथा दिवि । तथैव सर्वे पश्यन्ति, मनोहरवधूवरौ ॥६५॥ पुरोधा अञ्चलेनैतौ, निबद्ध्य च परस्परं । ज्ञापयति मिथो लग्नौ, तथा सुनामतः परम् ॥६६॥ तथैव वरमालादि, सम्बध्य ज्ञापयन्तथा । होमादिकं च कृत्वाऽसावकारयत्प्रदक्षिणाः ॥ ६७ ॥ अम्बरभेदिनो भूता, मङ्गलतूर्यनिःस्वनाः । नार्यो मधुरगीतैश्च, कृपन्ति मानसं तदा ॥ ६८ ॥ पश्यति धववक्त्रं सा, मानवत्यतिहर्षिता । नेत्रे क्षिप्त्वा बहिर्भागेऽवगुण्ठनस्य मध्यतः ॥६९॥ आदाय लप्सिकास्थालीं, भृङ्गारं सर्पिपा-

मपि । दिव्यभूषाम्बरधरा, कन्यामाताऽऽगता तदा ॥ ७० ॥ प्राक्कवलानि लात्वा सा, बाला वरार्थमर्पति । पश्चाद्वरोऽपि कन्याया, इति पूर्णो महस्तदा ॥ ७१ ॥ राजाऽदाद्दानमर्थिभ्यो, मानमन्यजनाय च । वधूसखश्च प्रासाद-मगाच्छ्वशुर-मानितः ॥ ७२ ॥ प्रशंसन्ति नृपं पौरा, धन्येमौ दम्पती सदा । ब्रह्मणाक्षिविनोदाय, निरमायि द्वयं वरम् ॥७३॥ चिन्तयति धनश्रेष्ठी, सम्बन्धस्त्वतिसुन्दरः । नृपोऽयं मम जामाता, का हानिश्च ममापरा ? ॥ ७४ ॥ शुभालम्बनतोऽकार्यम-प्यकार्यमपि जायते । यथा काञ्चनसंसर्गात्काचो मरकतायते ॥ ७५ ॥ धन्या मे कन्यका यस्मा-ज्जाता राज्ञः सुप्रेयसी । इत्थं हर्षेण संयुक्तः, श्रेष्ठी चिन्तयति स्वयम् ॥७६॥ नृपस्य गुप्तमन्त्रन्तु, न जानन्ति बुधा अपि । चतुष्कर्णश्च यो मन्त्रः, कदा स न हि भिद्यते ॥ ७७ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णस्तु धार्यते ।
द्विकर्णस्य तु मन्त्रस्य, ब्रह्माप्यन्तं न गच्छति ॥ ५ ॥

॥ इति मानवतीचरित्रे मानवतीपाणिग्रहणनामा द्वितीयः सर्गः ॥



# तृतीयः सर्गः ।

महीपमानतुङ्गोऽसौ, हर्षपूरितमानसः । मानवतीसहायश्च, निपसाद स्वमन्दिरम् ॥ १ ॥ पतिमुखं निभाल्यैषा, प्रह्लादिता स्वचेतसि । आश्चर्यं प्राप चित्ते च, राज्ञा सह करग्रहे ॥२॥ व्यापारी क च राजा क्व, चाद्भुतं मेलने हि नौ । ललाटे लिखितं यत्र, मिथ्या भवति सर्वथा ॥ ३ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

न स प्रकारः कोऽप्यस्ति, येनेत्थं भवितव्यता । छायेव निजदेहस्य, लङ्घ्यते जातु जन्तुभिः ॥ १ ॥

सा सा सम्पद्यते बुद्धिः, सा मतिः सा च भावना । सहायास्तादृशा ज्ञेया, यादृशी भवितव्यता ॥ २ ॥

कर्मणा निर्मिता मैत्री, शुभावयोः परस्परम् । पतिं वश्यं करिष्यामि, गुणग्रामैर्ममानिशम् ॥ ४ ॥ प्रेमपाशेन बध्नामि, कटाक्षैकेन स्वामिनम् । लक्ष्यं विध्यति धानुष्को, यथैकेनाशुगेन वै ॥५॥ नृपनेत्रद्वयं चारु, नारीरूपरसं पपौ । नाप निर्वृत्तिमापीय, राजाचित्रवदास्थितः ॥ ६ ॥ कोपसंरक्तचक्षुष्को रुष्टो मानवतीं प्रति । मन आकृष्य तस्याश्चा—वाङ्मुखो निपसाद सः ॥७॥ मानवती तदा चित्ते, विचारयत्यसौ नृपः । रसभङ्गं कथं कुर्यात्, कथं चावाङ्मुखः स्थितः ॥८॥ मयि दुर्गुणलेशोऽपि, दृष्टः किं स्वामिनामुना । मह्यं नालपति प्रीत्या, कारणं भावि तत्र किम् ? ॥ ९ ॥ लग्नप्राद्दिन एवेत्थ—मग्रे किं प्रचलिष्यति ।

मृषावाद-
परिहारे
श्रीमान-
तुङ्ग-
मानवती-
चरित्रम् ॥

॥ १० ॥



मक्षिकाप्रथमग्रासे, भोजनं तत्कथं भवेत् ? ॥ १० ॥ बद्धाञ्जलिस्तदोवाच, मानिनी मानवत्यसौ । भवान्विमुखभावं च, कथं प्राप्य दुनोति माम् ॥११॥ वराक्यां मयि कोपस्ते, युज्यते न हि सर्वथा। चिरभक्तं स्वयं क्षामा, भक्षयेत्को हि दोषभाक् ॥१२॥ लग्ना तवाञ्चलेनाहं, त्याज्या स्यां न कथंचन । तथाकृते मनुष्येभ्यः, क्रुध्यति परमेश्वरः ॥ १३ ॥ नाथ ! वद कृपासिन्धो ! मयाङ्कोऽयं प्रसारितः । नष्टधैर्यं समानेतु-मुत्पादय प्रसन्नताम् ॥१४॥ महाराज ! तवाग्रे मेऽबलायाः कीदृशं बलम् ? । विनतिः पादपातो वा, तदेव नो महद्बलम् ॥१५॥ मानवतीवचः श्रुत्वा, किञ्चिद्धुसं विहस्य सः । अरुणीकृत्य नेत्रे च, प्रोवाच मान-तुङ्गराट् ॥ १६ ॥ प्रिये ! रुष्टिरियं नास्ति, मनागद्यतना त्वयि । छलेन परिणेताऽहं, पादोदकपिपासया ॥ १७ ॥ उच्छिष्टा-न्नादिदानेन, तथ्यं कुरु वचस्तव । तथा च मां वशीकृत्य, दर्शय ते पराक्रमम् ॥१८॥ नरपतिवचः श्रुत्वा, भ्रान्ता मानवती तदा । विचिन्तयति सा चेत्थं, स्वामी वक्ति कथं तथा ॥ १९ ॥ विधिना स्नेहहीनोऽसौ, स्वामी दत्तः कुतो मम । प्रत्युत दुःखिनी जाता, व्यतीयुर्मे दिनाः कथम् ? ॥२०॥ सुरतरुरिति ज्ञात्वा, मया भूपः समाश्रितः । स तु कर्मवशाज्जातो, बब्बूलो दीर्घकण्टकः ॥ २१ ॥ मेरुतुल्या मनस्याशा, पुरासीद्भोगसंगमे । दुग्धस्य तक्रमुत्पन्नं, दैवयोगात्किमु भवेत् ॥ २२ ॥ वज्र-हृदयभर्त्राऽहं, वञ्चिता परिणीय नु । उत्तार्य कूपके पश्चाच्छिन्नश्च बन्धनं मम ॥२३॥ वा सपत्न्या कयाप्येत्य, निन्दा चाकारि मामकी । कुर्यां कमेत्य तद्वार्तामिह नास्ति च सज्जनः ॥ २४ ॥ सुलक्षणान्वितो दृष्टः, प्राणेशोऽयं नराधिपः । किन्तु प्रथम-तस्तेन, दर्शितो वेष आत्मीयः ॥ २५ ॥ नृपा न सन्ति मित्राणि, केषामपि न संशयः । जानामि यदि पूर्वं चेत्, परिणयामि न तदा ॥२६॥ यस्याः स्वामिसुखं नास्ति, तस्या जन्मनिरर्थकम् । तस्मात्पृच्छामि रुष्टं तं, कथं न वदसीति माम् ॥२७॥ स्वा-

मिन्! ममास्ति को दोषो, यन्न पश्यसि तन्मुखम्। कृपया तन्निगद्य मां, निवारय मनोव्यथाम् ॥२८॥ तत्कालं चेदहं हेया, परिणीता कथं त्वया?। प्रक्षालनाद्धि पङ्कस्य, दूरादस्पर्शनं वरम् ॥ २९ ॥ स्मरसि त्वं पुरा क्रीडे, वक्ष्यसि कुवचांसि यत्। वशीकरोषि भर्तारं, नागेनेनोक्षजं यथा ॥ ३० ॥ वचनानीत्यहं श्रुत्वा, गर्वनिष्कासनाय ते। पर्यणयं त्वया साकं, तथ्यं कुरु यन्मया ॥ ३१ ॥ कर्णोत्पले सुसंभ्रान्ते, तस्याः श्रुत्वैव तद्वचः। नृपं सोवाच प्राणेश!, क्रीडायां तद्वचो हि मे ॥ ३२ ॥ निर्दोषवनिते राजन्! क्षोभं नो धत्स्व तादृशम्। अङ्के तवोत्तमाङ्गं मे, स्थापितं त्वं दयां कुरु ॥३३॥ विश्वास्य परिणीताऽहं, पश्चात्स्वर्णेन छिद्यते। घोरपापं कथं मुञ्चेर्विचार्यतां हृदि प्रिय! ॥३४॥ प्रीतिचोरोऽल्पदोषेण, मा भूस्त्वं प्राणजीवन!। मान्यानि मे वचांसि भो, अबलान्तो न लीयते ॥३५॥ यथा यथा विनम्राऽहं, तथा त्वं जातकोपनः। तप्तायसि जलक्षेपं, मा कार्षीर्बुद्धिमान्नृप! ॥३६॥ कुरु खड्गपिधानं च, सर्वकार्यविचारतः। चलिष्यति न नाना स्त्रीं, मुष्टिर्बद्धा भवेद्धरा ॥ ३७ ॥ श्रुत्वा वचांसि तस्याः, स धत्ते चकितमात्मनि। यथा क्षतोपरि क्षार-पातेन भवति व्यथा ॥ ३८ ॥ संकुप्य भ्रमरे ऊचे, कटुवाणीं नृपोत्तमः। तरुणीनां पुरुपाग्रे, कियन्मात्र बलं वद ॥ ३९ ॥ यथेच्छं नाऽकरोदित्थं, दुर्गान्जयति निर्जयान्। हन्ति सिंहादिहिंस्रांश्च, मदस्राविगजानपि ॥ ४० ॥ वशं नयति देवादीन्, जले च सेतुबन्धनम्। चालयेद्गिरिवर्यं च, भनक्ति चायसार्गलाम् ॥४१॥ नराणां सेविका नारी, जानंतीति समे जनाः। यदि मुञ्चेत्पुमाँस्तां तत्, नास्ति तस्याः स्थितिः क्व च ॥ ४२ ॥ अनेकोपायतः स्त्रीणा-मुदरं पूर्यते जनैः। गृहकार्यं वराकी स्त्री, करोति सेविकेव सा ॥४३॥ आकर्ण्य वचनं भर्तुश्चञ्चच्चित्ता हि मानिनी। उवाच स्वामिनं वाणीं, मनश्चञ्चलकारिणीम् ॥ ४४ ॥ दैवनारीचरित्रयोः, पारो न पार्यते कदा। नारी करोति

यत्कार्यं, तस्मिन्न तुः समर्थता ॥ ४५ ॥ कुर्यां नम्रं यदि त्वां चे-दहं नारी सुलक्षणा । यदि तथ्यप्रतिज्ञाहं, तदैव धन्यभाग्य-भाक् ॥ ४६ ॥ वनितावचनं श्रुत्वा, चिन्तयामास भूपतिः । आहूयामात्यमादिशदित्यतिरक्तलोचनः ॥ ४७ ॥ प्रासादमेकस्तम्भं त्वमुद्घाटयाधुना प्रिय ! । सरोऽस्ति सजलं तत्र, विलासाय महामते ! ॥ ४८ ॥ भोज्यपेयादि वस्तूनि, सत्वरं भर तद्गृहे । तथाकृते स भूपालस्तत्रागान्मानिनी सखः ॥ ४९ ॥ गत्वा नारीं प्रति प्रोचे, वस त्वमत्र सर्वदा । अहं वार्तां तत्र ज्ञातुमागमिष्यामि वत्सरे ॥ ५० ॥ किन्तु पातय मां पादौ, दासं च कुरु सर्वदा । चिन्तां त्यक्त्वा वचः पाल्यं, विस्मरेन्न कदाहि तत् ॥५१॥ इत्युक्त्वा बहिरावासात्, यंत्रं दत्वा स भूपतिः । आरक्षकान्परिस्थाप्य, पश्चान्निवृत्तवाँस्ततः ॥ ५२ ॥

॥ इति मानवतीचरित्रे मानवतीत्यागनामा तृतीयः सर्गः ॥

# चतुर्थः सर्गः ।



वियोगिनी वसत्येक-स्तम्भके सप्तभूमिके । प्रासादाभूपणे सौधे, निन्दन्ती कर्मसञ्चयान् ॥१॥ एकेन्द्रियाकान्जीवान्, पीडयित्री सदैव किम् । क्षिप्त्वा तिलयन्त्रे किं, प्राणिनोऽहं बलादपि ॥२॥ अवर्णवादाः किं दत्ताः, कोपोपहतचेतसा । वञ्चिता व्यवहारे वा, नैके किं सरला जनाः ॥ ३ ॥ बालाः स्तनंधया किंवा, गृहीता रुदनान्विताः । पिपीलिकाबिलानि किं,

पूरितानि मदान्धया ॥ ४ ॥ व्रतं स्वीकृत्य वा कृत–मखाद्यवस्तुभोजनम् । पापकर्मफलं सर्वे–मुदितमधुना मम ॥ ५ ॥ परमेश्वर ! किं दत्तो ?, वियोगः स्वामिनो मम । विपरीतं कृतं किन्तत्, लक्षणं न शुभं तव ॥६॥ दत्वाऽवलावतारं च, वियोगः स्वामिना सह । तथा पितृवियोगश्च, निर्दयेन त्वया कृतः ॥ ७ ॥ कुलपूज्यश्च देवोऽपि, सेवितो नित्यशोभया । अधुना तौ गतौ कुत्र, दुःखिनीं मां विमुच्य हा ! ॥८॥ निष्ठुरस्य नम्रतायै, यतनीयं मया सदा। मुक्त्वा विलपनं धार्यं, धैर्यमेव वरं ननु ॥९॥ दुःखनाशे तपः श्रेष्ठं, विचार्येति तपोऽचरत् । दृढीकृत्य मनः सम्यग्, नमस्कारं जपेत्तदा ॥ १० ॥ निःसंशयं प्रमुच्येत, धर्म-सहाय आपदा । यथेच्छं सुखमादाय, स्वर्गं मोक्षं च गच्छति ॥ ११ ॥ प्रतिक्रमणयुग्मं च, निःशंकं कुर्वती सदा । सामायिक-व्रतं चापि, वशतायै नृपस्य सा ॥१२॥ व्यत्ययुर्दिवसास्तस्या, निःश्वसन्त्या हि सौधतः । परिहृता अलङ्कारा, अञ्जनं मज्जनं तथा ॥ १३ ॥ विरागे मग्नचेताः सा, विषयान्दूरमुज्झति । उद्योगं कर्तुकामा च, विचारयति चेतसि ॥ १४ ॥ एकदा मध्य-रात्रौ सा, जागृता वीरसुन्दरी । वातायनं समुद्घाट्य, चाहूतो वृद्धयामिकः ॥ १५ ॥ शीघ्रं स समागत्य, प्रोवाच सुन्दरीं प्रति । भवत्याः किं मया कार्यं, सेवकायादिशत्वरम् ॥१६॥ सन्देशः कथनीयश्चेन्नृपाय वद मातृके ! । निःसंशयं मनश्चिन्तां, दूरीकर्तुं कुरु त्वराम् ॥१७॥ नृपस्य किं त्वया छिन्नं, यत्तेन त्वं वियोगिनी । दुःखमिदं च दुःसह्यं, स्वाम्यग्रे न तु मे बलम् ॥१८॥ मानवती ब्रवीति सा, सनिःश्वासं च यामिकम् । भ्रातर्मे तव योग्यं च, कार्यमस्ति शृणु ह्यदः ॥ १९ ॥ सिद्धकार्यपुरस्कारं, न विस्मरामि तावकम् । उपकारं तथा चाहं, स्मरामि वीर ! सर्वदा ॥ २० ॥ कृपया कुरु मे कार्यं, सत्वरं गच्छ यामिक ! । गृह्यतां स्वर्णतन्तुस्रक्, मोचय विरहादिमाम् ॥ २१ ॥ यामिको लोभसंयुक्तः, प्रत्युवाचेति मानिनीम् । स्वामिनि !

वद कार्यं मे, संसाध्य प्रणमाम्यहम् ॥ २२ ॥ मानवती वदत्येवं, विज्ञापय पितुर्मम । परिणीय छलेनायं, वियोगमकरोन्नृपः ॥ २३ ॥ एकस्तम्भे निवासो मे, एकाकिन्या हि दुःखदः । पत्रपट्टेऽश्रुमष्या साऽलिखदङ्गुलिलेखिनी ॥ २४ ॥ गृहित्वा तद्गतो वृद्धो, यथा जानाति कोऽपि न । धनदत्तगृहं गत्वा, श्रेष्ठी पूत्कारितस्तदा ॥ २५ ॥ श्रेष्ठिनोद्घाटिते द्वारे, वृद्धः पत्रं प्रदत्तवान् । मुखेन सकलं वृत्तं, कथितश्च यथातथम् ॥ २६ ॥ विषिष्मिये धनश्रेष्ठी, दृष्ट्वा चीवरपत्रकम् । प्रसार्य तत्क्षणं पत्रं, वाचयति स सम्भ्रमम् ॥ २७ ॥ अश्रुलिखितवर्णानां, दर्शनेन चिखेद सः । गुप्तवार्ताञ्च विज्ञाय, स्थिरचित्तेन पश्यति ॥ २८ ॥ भवतां कृपया मेऽत्र, कुशलं वर्तते सदा । विज्ञप्तिः परमेकेय–मवधार्या गुणाकर ! ॥ २९ ॥ भूपतिना करग्रहो, मम सोत्सवतः कृतः । विरहस्तेन दत्तोऽद्य, तदुपायो विचारितः ॥३०॥ भवदागारमारभ्य, मद्गेहं यावदन्तरे । भित्वा भूमिं विधातव्या, सुरङ्गा सत्वरं त्वया ॥३१॥ आगम्यते मया येन, भवन्तं प्रति नित्यशः । करिष्यामि तदा तात !, वार्तां चैवातिदुःखदाम् ॥३२॥ एकाकिन्याश्च मे वासः, पूज्यैकस्तम्भसद्मनि । सुज्ञेषु बहुना किं वा, गुह्यं गेयं हि स्तोकतः ॥३३॥ इति निर्वाच्य स श्रेष्ठी, वेपथुं प्राप सत्वरम् । प्रत्युत्तरं लिखित्वा स, सेवकाय प्रदत्तवान् ॥३४॥ वृद्धो मानवतीं प्राप्य, चकार हर्षितां ततः । इतश्च धनदत्तेभ्यो, मूढः कर्तव्यकर्मणि ॥३५॥ अथ प्रातः समुत्थाय, गृहकारान्समानयत् । रहस्यं सकलं तेभ्यः, कथयामास विस्तरम् ॥३६॥ गोपनीयमिदं कार्यं, करोमि वः प्रसन्नताम् । कर्मकरास्त्वरापन्ना, जाताः कार्यस्य सिद्धये ॥ ३७ ॥ कालक्रमेण मार्गोऽसौ, जातः सर्वाङ्गसुन्दरः । मानवतीति विज्ञाय, प्रफुल्लवदना बभौ ॥ ३८ ॥ सुरङ्गापूर्तिसंदेशो, दत्तः कर्मकरैस्तदा । श्रेष्ठिसन्मानिताः सर्वे, गताः स्वस्थानकं प्रति ॥ ३९ ॥ मानवती पथा तेन,

प्रविष्टा पितृसद्मनि । प्रणम्य पितरौ हर्षात्, वृत्तमुक्तं यथातथम् ॥ ४० ॥ पितरौ कथयन्तौ यत्, शोकश्च क्रियते मुधा। जलं पीत्वा गृहप्रश्नः, कुत्रत्या रीतिरीदृशी ?॥४१॥ तत्तथा सा तदोवाच, वीणां यद्यानयेः पितः ! । सरलीकरवाणि त-द्राजानं तं मदोद्धतम् ॥ ४२ ॥ हट्टादानाय्य वीणां स, मानवतीं समर्पयत् । तयापि योगिनिरूप-माधाय चोद्धृता वीणा ॥४३॥ नृपस्य वञ्चनार्थं सा, मुक्तकेशी तदाऽभवत् । भस्मभूषितगात्री च, ललाटे घुसृणार्चनम् ॥ ४४ ॥ कच्छविभूषिता कट्यां, तत्पादयो-रुपानहौ । कण्ठे रुद्राक्षमालां च, नयने रक्ततायुते ॥ ४५ ॥ शरीराच्छादने पीत-शाटिकायोगपट्टके । यथा सरस्वती साक्षात्, कन्धरस्थितवीणया ॥ ४६ ॥ पित्रोश्च संमतिं लब्ध्वा, योगिनीवेषसंयुता। उज्जयिन्यां च बभ्राम, भ्रमन्ती प्रतिमन्दिरम् ॥ ४७ ॥ गौराङ्गी कोकिलालापा, चित्तं हरति जीविनाम् । नरनार्यो भ्रमन्ति त-द्गीतसंकृष्टचेतनाः ॥ ४८ ॥ प्रशंसा स्फूर्तिं-मापन्ना, प्रतिरथ्यं गृहे गृहे। वार्ता सर्वा परित्यज्य, योगिनीवार्तमादृतम् ॥ ४९ ॥ दिनचर्यामिमां कृत्वा, गत्वा सायं पितु-र्गृहम् । तौ समाश्वास्य गच्छन्ती, सासीन्निजनिवासकम् ॥ ५० ॥ पुनः सुरङ्गया प्रात-र्योगिनीवेषधारिणी । निर्गत्य गान-कार्याय, गच्छति प्रत्यहं पुरम् ॥ ५१ ॥ प्रजामुखान्नृपेणाऽपि, गीतकीर्तिर्बहु श्रुता । योगिनीरूपसंद्रष्टु-मुत्सुकश्च तदाऽभवत् ॥ ५२ ॥ आह्वानाय प्रधानं स, प्रैषीत्तस्याश्च सन्निधौ । सोऽपि गत्वा च तां नत्वा, प्रोवाच मधुरां गिरम् ॥ ५३ ॥ पिपासु-र्दर्शनानां ते, नृपो ह्वयति सत्वरम् । तत्कृपया समागच्छ, वीणां दत्वा करे मम ॥५४॥ मनो विकसितं तस्या, वीणामादाय सत्वरम् । प्रचचाल प्रधानेन, सह राजसभां प्रति ॥५५॥ यदा सभां प्रविष्टा सा, दृष्टा राज्ञा च योगिनी । तदोत्थायापतत्पादे, योगिन्या बहुमानतः ॥५६॥ सिंहासने परिस्थाप्य, प्रोवाच भूपतिर्वचः । आगच्छसि कुतः पूज्ये !, कुत्र निवास आत्मीयः ?॥५७॥

त्वयि यथाश्रुतं दृष्टं, नगरे स्वागतं तव । यन्नेत्रे मेऽपि साफल्यं, प्रापतुर्दर्शनेन हि ॥५८॥ धन्या त्वं यदहोरात्रं, प्रभुभक्तिपरायणा । शुद्धमार्गे चलन्ती च, ध्यानमग्नाऽसि भद्रिके ! ॥५९॥ परन्तु योगिनीवेषः, कथं बाल्ये धृतस्त्वया ? । इति चिन्तानिमग्नं माम्, स्पष्टं कृत्वा समुद्धर ॥६०॥ तदा मानवती प्रोचे, शृणु भूपाल ! मे वचः । अतीतायाश्च मे वार्ता, जानाति कोऽपि नो कदा ॥ ६१ ॥ भ्रमन्ती सर्वदा देशे, नानातीर्थेषु सादरा । अवन्तीदर्शनार्थाह–मागताऽत्र सुखं स्थिता ॥ ६२ ॥ आगन्ता कश्च को गन्ताऽऽयान्ति सर्वेऽम्बवारिणा । प्रभुभक्तिरतः श्रेष्ठः, संसारो दुःखसागरः ॥ ६३ ॥ माता कस्य पिता कस्य ? पत्नी भ्राता च कस्य च ? । एकाकी जीव एवान्ते, याति कर्मानुसारतः ॥६४॥ तस्यैव जन्मसाफल्यं, शान्तिदा यस्य वासराः । आनीतं किञ्च नेता किं, संसारः स्वार्थसाधकः ॥ ६५ ॥

उक्तश्च सूक्तमुक्तावल्यां—

चेतोहरा युवतयः स्वजनोऽनुकूलः, सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः ।
वल्गन्ति दन्तिनिवहास्तरलास्तुरङ्गाः, सम्मिलने नयनयोर्न हि किञ्चिदस्ति ॥ १ ॥

श्रियो विद्युल्लोलाः कतिपयदिनं यौवनमिदं, सुखं दुःखाघ्रातं वपुरनियतं व्याधिविधुरम् ।
दुरापाः सत्पत्न्यो बहुभिरथवा किं प्रलपितै–रसारः संसारस्तदिह निपुणं जागृत जनाः ! ॥ २ ॥
घनापायः कायः प्रकृतिचपला श्रीरपि चला । महारोगा भोगाः कुवलयदृशः सर्पसदृशः ।

गृहावासः पाशः प्रणयिषु सुखं स्थैर्यविमुखं । असारः संसारस्तदिह निपुणं जाग्रत जनाः ! ॥३॥
भोगास्तुङ्ग तरङ्गभङ्गचपलाः प्राणाः क्षणध्वंसिनः, स्तोकान्येव दिनानि यौवनसुखं प्रीतिः प्रियेष्वस्थिरा
तत्संसारमसारमेव निखिलं बुद्ध्वाऽऽत्मपापक्षये, लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥४॥
आत्मसुखार्थं क्रियते भोगः, पश्चादेष शरीरे रोगः । रोगे जाते मरणं शरणं, तदपि न मुञ्चति पापाचरणम्

श्रुत्वैतन्नृपतिर्हृष्टः, कृत्वाऽञ्जलिमुवाच ताम् । वीणां संयोज्य गायेस्त्वं, स्वीकुरुष्व वचो मम ॥ ६६ ॥ उत्कण्ठितं नृपं दृष्ट्वा, गीतं मधुरया गिरा । तथा च वादिता वीणा, भूपादिर्लीनतामगात् ॥ ६७ ॥ चिन्तयति तदा राजा, चेयं मानवती समा । किं तया वञ्चितुं मां हि, कृतेयं योजना शुभा ॥ ६८ ॥ किन्तु सा रक्षिता यत्नै-र्येनाऽऽगच्छति नो कदा । प्रत्यक्षं करवाणि तत्स्वयं गत्वा निवासकम् ॥६९॥ चलचित्तं नृपं दृष्ट्वा, चिन्तयामास योगिनी । कदाचिद्द्रष्टुकामोऽयं, नृपः सौधं गमिष्यति ॥ ७० ॥ विचार्येति धृता वीणा, नृपं पृष्ट्वा गता ततः । पितृगृहात्सुरङ्गया, गतैकस्तम्भकं क्रमात् ॥७१॥ योगिनीवेषमुत्तार्य, पूर्व एव तया धृतः । दोलायां सा ततः सुप्ता, तावन्नृप उपस्थितः ॥ ७२ ॥ द्वारमुद्घाट्य राजा सा, चागतो यत्र मानिनी । दोलासुप्तां च तां दृष्ट्वा, विश्वस्तो हृदि तत्क्षणम् ॥ ७३ ॥ चकितो वदतीत्थं स, वराकी सा तु निद्रिता । उपायं सा न जानाति, पादपातनकारणम् ॥ ७४ ॥ गत्वा मानवतीं राजा, निद्राममोचयत्ततः । भ्रान्ता चोत्थाय राजानं, प्रणिपत्येत्युवाच सा ॥ ७५ ॥ स्वामिन् ! तन्महदाश्चर्यं, गृहे मे भवदागमः । पादावधारणेनैव, पवित्रा

सेविका कृता ॥ ७६ ॥ किञ्चाज्ञानतयाकारि, किमत्रागमनं वद । अस्ति मे शपथस्तुभ्य-मित्युक्त्वा पाणिमग्रहीत् ॥ ७७ ॥ राजोवाच समाचारा-न्ज्ञातुमद्य समागतः । तर्हि वद प्रिये ! किञ्चिद-पेक्षसे हि वस्तुकम् ॥ ७८ ॥ मानवती प्रतिब्रूते, स्नेहेनैतावता सृतम् । भवतोऽहं कृपां मन्ये, यदागाः सेविकागृहम् ॥ ७९ ॥ एकस्तम्भे च सौधेऽस्मिन्, विना त्वां वासयेद्धि कः ? । प्रिय ! तं ते गुणग्रामं, कथञ्चिद्विस्मरामि न ॥८०॥ मानतुङ्गस्तदोवाच, दोषो मे नास्ति तत्र कः । प्रथमतस्त्वया जिह्वा, कथं वशीकृता न हि ? ॥८१॥ अमृतं च विषश्चैव, जिह्वायामेव संस्थिते । रसश्च विरसश्चापि, तत्रैव समुपस्थितौ ॥ ८२ ॥ शृण्वन्ति कोकिलावाच-मुड्डापयन्ति वायसान् । जिह्वादोषेण बन्धुश्च, युध्यते बन्धुना सह ॥ ८३ ॥ गीर्न वाच्याऽविचार्यैव, यतो दुःखं तु वर्धते । निदर्शनं तु तत्रैव, प्रत्यक्षं त्वं भवेर्ननु ॥ ८४ ॥ उवाच मानिनी वाणी-मयोग्यं कथितं न हि । पालयामि वचांसि मे, प्रोक्तानि बालखेलने ॥ ८५ ॥ पातयामि यदि पादे, मन्यतां सत्यवाक् तदा । त्वया कार्यं कृतं सर्वं, किन्तु प्रभुः सहायकः ॥ ८६ ॥ अश्रौषीत्तद्वचो भूप-स्तस्यै भृशं चुकोप सः । तथाऽरुणीकृते नेत्रे, यथाग्निर्घृतसेचनात् ॥ ८७ ॥ रे रे कामिनि ! निर्गुणे !, निर्लज्जा दृश्यते ननु । मुञ्चसि न कदाग्रह-मतस्त्वं दुःखिनी भव ॥ ८८ ॥ सौधेऽस्मिन्वनितां त्यक्त्वा, तत्क्षणमुत्थितो नृपः । यन्त्रादिकं पुनर्दत्वा, गतो राजसभां प्रति ॥ ८९ ॥ मानवत्युपतातं सा, गत्वा जाता च योगिनी । अगच्छन्नगरं पश्चा-त्तथा नृपसदोगृहम् ॥ ९० ॥ भूपतिर्योगिनीपादौ, स्वोत्तमाङ्गे मुदा दधन् । शृण्वन् गीतानि नित्यं च, तस्या आसक्ततां ययौ ॥ ९१ ॥ पातितः पादयोः स्वामीत्येकवाक्यं प्रपूरितम् । चरणोदकपानाय, योगिन्यद्य व्यचिन्तयत् ॥ ९२ ॥ तस्या अग्रे नृपेणाऽपि, मुक्तं मानं च दूरतः । कर्णौ दत्वा स

गृह्णाति, वीणानादान् मनोहरान् ॥ ९३ ॥ करौ संयोज्य भूपाल, उवाच तां प्रति तदा । दासरूपेण मां रक्ष, वेतनेन विना शुभे ! ॥९४॥ त्वयात्रागत्य गीतेन, द्राग्नीतो वशतामहम् । वियोगीकृत्य कुत्राऽपि, न त्वं गच्छेः कृपानिधे ! ॥९५॥ सर्वदैव वसाऽत्र त्वं, सम्भालयामि नित्यशः । शुश्रुषां च करिष्यामि, सर्वप्रकारतः स्वयम् ॥ ९६ ॥ त्वां विनाऽर्धक्षणं सोढुं, मया न शक्यते कदा । अतोऽत्र नो वसेश्चेत्त्वं शिष्यं कृत्वा नयेः सह ॥९७॥ योगिनि ! किं मया छिन्नं, यन्माया चेदृशी कृता । मनोवाक्कायदानेन, जातोऽद्याकिञ्चनः स्वयम् ॥ ९८ ॥ भृत्यास्ते मादृशा नैके, किन्त्वेकैवासि मे सदा । श्रुत्वेत्थं प्रत्युवाच सा, रक्षिता कोऽपि मे न हि ॥ ९९ ॥ योगी भोगी मिथः स्नेहं, न कुर्वाते कथञ्चन । वसेदेकत्र योगी न, योगं साध्नन्सदाऽटति ॥१००॥ योगी मित्रं कदापि न, निर्भीको निःस्पृहस्तथा । त्यक्तपितृकयोगिनी, सा कथं त्वयि स्निह्यति ? ॥१०१॥ यत्त्वया वासनीया स्यां, मन्यस्वैकं वचो मम । तच्छ्रुत्वा नृपतिर्ब्रूते, शृण्व वाचं मनोरमाम् ॥ १०२ ॥ कुतोऽस्माकं तथा भाग्य–मादेशः क्रियते तव । दृढाग्रहं नृपस्येत्थं, ज्ञात्वा सोचे वचस्तदा ॥ १०३ ॥ यदि दूरे गच्छेस्त्वं, तर्ह्यवसं तवान्तिकम् । लक्षलक्षापशब्दा मे, सहनीयास्त्वया सदा ॥ १०४ ॥ यदि विमुच्य मां चेत्त्वं, दूरं वसेः क्षणं तदा । उत्थाय प्रचलिष्यामि, सत्यमस्ति वचो मम ॥ १०५ ॥ प्रणिपत्य नृपः प्रोचे, पालयिष्यामि तत्समम् । तदाग्रहेण भूपेन, निवासस्तत्र स्वीकृतः ॥ १०६ ॥ योगिनीनृपयोश्चित्ते, मिलिते दृढभावतः । शर्कराक्षीरयोः सङ्गो, यथा संजायते शुभः ॥ १०७ ॥ राज्यकार्यं मुमोचासौ, तया वशीकृतः किमु । तस्या वासं विमोच्य न, गच्छत्यन्यत्र कुत्रचित् ॥१०८॥ निर्मलो भूपतिर्भेदं, तस्यां पश्यति नो कदा । श्वेतमात्रं पयः कृत्वा, चित्ते धारयति सदा ॥ १०९ ॥ योगिनी नृपमान्या सा, भागीरथी यथाऽऽगता । तस्या मोहे निम-

मृषावाद-परिहारे श्रीमान-तुङ्ग-मानवती-चरित्रम् ॥

॥ ९५ ॥

ग्रोऽसौ, कृतार्थं मन्यते निजम् ॥ ११० ॥ रञ्जयति क्षणं भूपं, पादे नमयति क्षणम् । न्यायेन दुग्धदण्डस्य:, ताडयति प्रतिक्षणम् ॥ १११ ॥ क्षणं पादप्रहारं च, बालसोदरलालनम् । ताडयति यथा सा तं, लिलेह भूतलं तथा ॥ ११२ ॥ आचरति नृपश्चेत्थं, विरोधो न यथा भवेत् । गमिष्यत्यन्यथा सा तु, पक्षिणीव स्थलादितः ॥ ११३ ॥ सहते ताडयित्रीं तां, पटहो दण्डिकां यथा । तस्या नृपो वशीभूतो, यथा शच्याः पुरन्दरः ॥ ११४ ॥ गुणिनो गुणिषु वश्या, मणय इव हेमसु । वार्ताश्च रसिकास्तेषां, प्रत्यक्षममृतस्रवाः ॥ ११५ ॥ गुणः सम्पूज्यते सर्वै-र्घटे तेन जलं धरेत् । सेव्यन्ते गुणिनो देवैः, भ्रमरैः पङ्कजं यथा ॥ ११६ ॥ आच्छादयति दोषान्वै, गुणैः कोऽपि यदि भवेत् । यथा फणिपतेर्दोषान्, गोपयति मणिर्गुरून् ॥ ११७ ॥

उक्तश्च सूक्तमुक्तावल्यां—

दोषाः किन्नाम कुर्वन्ति, गुणापहृतचेतसाम् । केतकीकुसुमं भृङ्गः, खण्ड्यमानोऽपि सेवते ॥ ६ ॥
दोषमपि गुणवति जने, दृष्ट्वा गुणरागिणो न खिद्यन्ते । प्रीत्यैव शशिनिपतितं, पश्यति लोकः कलङ्कमपि । ७
निरसान्यपि रोचन्ते, कर्पासस्य फलानि नः । येषां गुणमयं जन्म, परेषां गुह्यगुप्तये ॥ ८ ॥
ये गुणिनो न जानन्ति, नाद्रियन्ते च ये गुणान् । अजागलस्तनस्येव, तेषां निष्फलजीवनम् ॥९॥
गुणेष्वनादरं भ्रातः !, पूर्णश्रीरपि मा कृथाः । सम्पूर्णोऽपि घटः कूपे, गुणच्छेदात्पतत्यधः ॥ १० ॥

गुणष्वेवादरः कार्यः, किमाटोपैः प्रयोजनम् ?। विक्रीयन्ते न घण्टाभि–र्गावः क्षीरविवर्जिताः ॥११॥ संधयेत्सरला सूची, वक्रा छेदाय कर्तरी । अतो विमुच्य वक्रत्वं, गुणानेव समाश्रयेत् ॥ १२ ॥

तथा गुणगणं ज्ञात्वा, त्रिकरणैश्च योगिनी । वाद्यगानविशेषैश्च, तदा प्राह्लादयन्नृपम् ॥ ११८ ॥ भ्रमन्ती नगरे सेयं, वशं नयति मानुषान् । अपि तातगृहं गच्छेत्, स्वावासं च सुरङ्गया ॥ ११९ ॥ यामिकेनालपन्ती च, पृच्छत्यमोघसंमतिम् । इतश्च योगिनीं विना, क्षणार्द्धं राट् न तिष्ठति ॥ १२० ॥ एवं कियान्गतः कालो, राजाऽपि वशतां गतः । मनोवाक्कायमर्पित्वा, नाम्नैव नृप आस्थितः ॥ १२१ ॥

इति मानवतीचरित्रे मानवत्या योगिनीभवनं राज्ञश्च पादपातननामा चतुर्थः सर्गः ।

## पञ्चमः सर्गः ।

अवन्तीतस्तदा काले, पूर्त्यर्थमुदरस्य वै । अवाक्पथमनुसृत्य, चचालैको वणिक्सुतः ॥ १ ॥ अनुक्रमेण प्राप्तः स, मुंगिपत्तनपत्तनम् । उष्णांशुतापतप्तात्मा, वृक्षच्छायामुपाविशत् ॥२॥ कस्मै पौराय चाप्राक्षीत्, शास्ति को नगरीमिमाम् । उत्तरं दत्तवान्सोऽपि, दलस्तम्भनराडिति ॥ ३ ॥ महिषी गुणमञ्जरी, सर्वकलान्विता सती । तस्या रत्नवती कन्याऽ–नुपमा गुण-

रूपतः ॥ ४ ॥ अधुना बालिका सैवा-गन्ता वसन्तक्रीडने। इष्यते नेत्रशान्तिश्चेत्, कश्चित्कालः प्रतीक्ष्यताम् ॥५॥ पान्थश्चिन्तयत्येवं, प्रेक्षणं प्राणतः शुभम् । सायाह्ने च गमिष्यामि, विचार्यैवं श्रितस्तरुम् ॥ ६ ॥ यावत्क्षणं स्थितः पान्थ-स्तावद्बाला समागता। ससखी च गतोद्यानं, क्रीडासमुत्सुका ततः ॥७॥ मिथो दोषं गले धृत्वा, काश्चिद्दत्वा च तालिकाम् । इत्थमारेभिरे खेलं, गत्वा क्रीडावनं समाः ॥८॥ उत्सुका गोपने काश्चि-ल्लतावेश्म विशन्ति च। रत्नवती क्षणैकेन, शोधयति समास्तदा ॥९॥ काश्चित्कदम्बगुच्छेषु, गोपयन्ति लघुं तनुम्। श्रमबिन्दून्स्रवन्ति ते, मुक्ता इव दिदीपिरे ॥१०॥ काश्चित्कुसुमकन्दुकान्, मिथः क्षिपन्ति हर्षतः। विशीर्णकुन्तलाः काश्चि-द्धावन्तीतस्ततस्तदा ॥ ११ ॥ यथोर्वशीन्द्रसद्मतः, समागतात्र कानने । वनशोभा तथैवाद्य, निमित्तं ऋतुराडभूत ॥१२॥ पथिको भूपकन्यान्ता, वीक्षतेऽधीरया दृशा । प्रच्छन्नश्चौरवद्भूत्वा, नैवोवाच वचस्तथा ॥ १३ ॥ रत्नवती ददर्श त-मानेतुममुचत्सखीम् । सापि गत्वा नरं तञ्च, सत्वरं च समानयत् ॥ १४ ॥ वणिग्रत्नवतीं नत्वा, सन्मुखस्तत्र सुस्थितः। पृच्छति राजपुत्रीति, क्व गमी कुत आगतः? ॥१५॥ सोपि प्रोवाच धन्यायाः, उज्जयिन्याः समागतः। या मानतुङ्गभूपाल-पातिव्रत्ये स्थिता क्षितौ ॥ १६ ॥ गुणरूपादिभिर्यस्य, यौवनमधिकं कृतम् । पपीः प्रतापपीडातः, सायं प्रशमनायते ॥ १७ ॥ कालक्रमेण संवृद्धं, यशो यस्य सुनिर्मलम् । स्थानाभावेन पृथ्वीतो, गतं स्वर्गेऽपि नो ममौ ॥१८॥ मानतुङ्गस्वरूपाग्रे, कामदेवो वृथा भवेत् । विचार्येति महादेवोऽस्थापयत्स्वर्गसद्मनि ॥१९॥ कल्लोलकञ्चना स्नातृ-याचकसंयुता तथा। पर्वतराजनिःसृता, दत्तिगङ्गाऽस्ति तद् गृहे ॥२०॥ यस्य दृशा स नाश्लिष्टो, निष्फलं तस्य जीवनम् । वर्णनैः पार्यते नैव, प्रत्यक्षदर्शनं विना ॥ २१ ॥ रत्नवती स्तुतीः श्रुत्वा, तस्मिन्बभूव रागिणी । परिणेतुं च तत्काल-मुत्कण्ठा-

मादधे हृदि ॥२२॥ त्यक्त्वा वसन्तकेलिं सा, संप्राप्ता तत्क्षणङ्गृहं । अन्यकार्यं परित्यज्य, मानतुङ्गं व्यचारयत् ॥२३॥ चेटी-मुवाच सा कन्या, गतं तु शैशवं मम । मन्ये यौवनसम्पूर्णं, शरीरं वर्तते खलु ॥२४॥ परिणेतुमनाश्चाहं, भोगान्भोक्तुमनास्तथा। दामि त्वामतो मेऽर्थे, पूरयेरुपकारिणि! ॥२५॥ उज्जयिनीपतिः प्रेम्णा, परिणेयोऽन्यथाऽनलः । मातरं वद गच्छ त्वं, कृपां कुरु मयि पराम् ॥ २६ ॥ तत्क्षणं सा प्रधाविता, राज्ञीसान्निध्यमागता । वृत्तान्तं कथयामास, कुमार्याश्च यथोदितम् ॥२७॥ महिष्या गुणमञ्जर्या, निवेदितं नृपान्तिके । यत्कुमारी समुत्कण्ठा, मानतुङ्गकरग्रहे ॥२८॥ राजाप्युवाच हे राज्ञि!, विषादं कुरु नो वृथा । तदीच्छां पूरयिष्यामि, तेन सह करग्रहात् ॥२९॥ आश्वासिता कनी मात्रा, राजवाक्यं च श्रावितम् । तस्माद्बालाहृदो हर्षो, स्थानाभावाद्बहिर्ययौ ॥३०॥ दलस्तम्भनराजर्षि-राह्वयत्सचिवाग्रणीम् । रहस्युवाच हे भ्रातर्! अवन्तीं गच्छ सम्प्रति ॥३१॥ मानतुङ्गनृपं नत्वा, संदिश तं ततः परम् । यच्छीघ्रं परिणेतुं मे, कनीमागम्यतामिति ॥ ३२ ॥ यथाशक्ति करिष्यामि, शुश्रूषां तव हे प्रभो!। दासत्वेन सदाभावी, तथा कथय सत्वरम् ॥ ३३ ॥ मार्गः शीघ्रं समुल्लङ्घ्यो, विलम्बः क्वापि नो भवेत् । पश्चात्सत्वरमागच्छ, मानतुङ्गसखः शुभैः ॥ ३४ ॥ राजाज्ञातः स मन्त्रीश, आरुरोहत्तुरङ्गमम् । सम्बलश्च सहादाय, योधानां यूथकं तथा ॥३५॥ भूमिं गिरींश्च पश्यन्स, सरलेन पथा पुरीम् । अवन्तीं कतिभिर्वारै-रागतो व्याधिवर्जितः ॥३६॥ दक्षिणापत्यमात्येन, संश्लिष्टो मानतुङ्गराट् । उपहारं समीक्ष्य च, हृष्टः स भूपुरंदरः ॥३७॥ दलस्तम्भनभूपस्य, सचिवोऽय-मिति श्रुतम् । ततः सुन्दरसौधे तम-वासयदिलापतिः ॥३८॥ मन्त्रिणा च कृतो वासो, भुक्तं मिष्टान्नभोजनम् । परिधाय स वासांसि, सायं सदोगृहं गतः ॥ ३९ ॥ एकान्तं च समासाद्य, भूपतये न्यवेदयत् । आगतो तव सान्निध्यं, दलस्तम्भन-

नोदितः ॥ ४० ॥ राजकन्यकयास्माकं, प्रतिज्ञा प्रखरा कृता । वृणुयां मानतुङ्गं चेद-न्यथा पुण्यपावकम् ॥४१॥ तस्मात्त्वं
पणपूर्त्यर्थ-मागच्छ कृपया प्रभो ! । एतदेव विचार्यं मदा-गमनप्रयोजनम् ॥४२॥ सज्जीभूयाद्य हे स्वामिन् !, कुरु शीघ्रं
प्रवासनम् । क्षणैकोऽपि समा तुल्यो, रत्नवत्या हि गण्यते ॥४३॥ वचांसि भूपतिः श्रृण्व-न्नास्ते दत्ते च नोत्तरम् । विचारणा-
निमग्नोऽसा-वधो नेत्रे चकार च ॥ ४४ ॥ उवाच सचिवः शीघ्रं, ब्रवीति नो कथं मनाक् । प्रत्युत्तरप्रदाने किं, मूल्यं भवति
भूपते ! ॥ ४५ ॥ मानतुङ्गस्तदावक्ति, निषेधो नास्ति मे कदा । स्वीकृतं ते वचः किन्तु, विचारैको हि विद्यते ॥ ४६ ॥
विचारयति भूपालो, गन्तव्यं बहुदूरतः । सन्निधिवासभङ्गेन, योगिनी खिद्यते हृदि ॥ ४७ ॥ परिणेतुं न गच्छेयं, तर्हि रुष्टो
भवेन्नृपः । द्वयोर्मनः प्रसादाय, योग्यं किं कार्यमत्र वै ॥४८॥ युगपद् द्वे क्रिये केन, मार्गेण क्रियते मया । व्याघ्रसरितयो-
रित्थं, न्यायो हृदि समुत्थितः ॥ ४९ ॥ आगता योगिनी ताव-त्तदोत्थाय स भूपतिः । प्रणतः पादयोस्तस्याः, पश्यति
सति मन्त्रिणि ॥ ५० ॥ आसनं सा समादाय, गानमारभते शुभम् । नृपस्य वदनं सम्यक्, प्रेक्षते शोकसंयुतम् ॥ ५१ ॥
योगिन्युवाच भूपालं, कथं शोकाब्धिब्रूडितः ? । अद्य तव प्रफुल्लास्यं, प्रातः शशीव दृश्यते ॥ ५२ ॥ आनयेयं बलादिन्द्रं,
तवादेशो भवेद्यदि । मेरुं सूर्यं मृगाङ्कं च, करवाणि वशगाः पुनः ॥ ५३ ॥ राजोवाच स तां तथ्यं, वर्तते मुंगिपत्तनम् ।
दलस्तम्भनराट् तत्र, रत्नावती च तत्कनी ॥ ५४ ॥ कृतसंधा मदर्थं सा, प्रधान आगतस्ततः । सत्येन किं मया कार्य-मिति
चिन्ता तरङ्गितः ॥ ५५ ॥ प्ररुष्टा सा तदोवाच, नृप ! किं त्वं ब्रवीत्यदः । स्मर दत्तवचः पूर्वम्, विस्मृतं तावता किमु ॥५६॥
यद्यासीत्तदवह्यं चेत्, विसृष्टाऽहं न किं त्वया । वचोभ्रष्टा नरास्ते तु, वानरा एव भूतले ॥५७॥ निश्चयेन पुरा ह्यत्र, वास

आसीन्मया कृतः । किन्तु कूटं तव ज्ञातं, प्रतीतिरुत्थिता ततः ॥ ५८ ॥ धिग्धिग्तवावतारं च, कथं त्वामसृजत् विधिः । त्वत्तोऽहं श्रेष्ठतायुक्ता, यन्निवसामि सन्निधिम् ॥ ५९ ॥ मयाऽपि गम्यतेऽन्यत्र, स्मर्तव्यं योगिभिः किमु । गृहैके पिहिते तेषाम–नेकान्युद्घटन्ति हि ॥६०॥ देयं किन्ते मया राजन् !, यदि स्याद्वद सत्वरम् । अह्यरियोगिनः केषां, कदापि सुहृदो न हि ॥६१॥ शासनं कुरु नित्यं त्वं, कार्यं मम त्वयाद्य किम् ? । इत्यादि योगिनीवाचं, नृपोऽशृणोन्नताननः ॥६२॥ तत्क्षणं योगिनीपादौ, प्रणम्याद्य स भूपतिः । प्रसादयितु कामश्चोपायानेकान्समाचरत् ॥ ६३ ॥ अरे सुभगयोगिनि !, तवापरा– ध्ययं जनः । मा कार्षीस्त्वं मयि क्रोधं, क्षमैव युज्यते तव ॥६४॥ सेवाभ्रष्टेऽपि भृत्ये न, वचोभ्रष्टो भवेत्प्रभुः । अपकृत्युपकर्ता स, मणिः काचो भवेत्परः ॥ ६५ ॥ दंदह्यमानोऽपि सुगन्धदायी, कृष्णागुरुनिर्मलकीर्तियाची । कोशश्च वाःपातकदर्थितोऽपि, वार्यमृतं निर्मलमाददाति ॥ ६६ ॥ संघृष्यते कश्मिरजं यथाहि, सौरभ्यभावं च तथा दधाति । प्रज्वाल्यते हेम तथैव याति, सुरम्यभावं जनतोपकारि ॥ ६७ ॥ यन्त्रे यथेक्षुर्भजते हि पीडां, तथा तथा स्वादुरसं ददाति । तथा महादोषयुते स्वदासे, कदापि साधुर्विमना भवेन्न ॥ ६८ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

सन्तापितोऽपि साधुः, शुभस्वभावं विशेषतो भजति ।
कथितं किं न क्षीरं, मधुररसमनोहरं भवति ? ॥ १ ॥

सुजनो न याति विकृतिं, परहितनिरतो विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः, सुरभयति मुखं कुठारस्य ॥ २ ॥
दुर्जनजनसंतप्तो यः, साधुः साधुरेव स विशेषात् ।
अपि पावकसंतप्तः, खण्डः स्याच्छार्करो मधुरः ॥ ३ ॥
हिताय नाहिताय स्यात्, महान् सन्तापितोऽपि हि ।
पश्य रोगापहाराय, भवेदुष्णीकृतं पयः ॥ ४ ॥
दुर्जनवचनाङ्गारै-र्दग्धोऽपि न विप्रियं वदत्यार्यः ।
न हि दह्यमानोऽप्यगुरुः, स्वभावगन्धं परित्यजति ॥ ५ ॥
पिशुनजनदूषिता अपि, न तु सन्तः सत्यमेव सद्वाचः ।
अपि बर्बरचरणहतः, खर्जूरो मिष्ट एव स्यात् ॥ ६ ॥
सहते कटुं न जल्पति, लाति न दोषान् गुणान् प्रकाशयति ।
रुष्यति न रोषवत्स्वपि, दाक्षिण्यमहोदधिः सुजनः ॥ ७ ॥

आक्रोशितोऽपि सुजनो न वदत्यवाच्यं, निष्पीडितोऽपि रसमुद्गिरते यथेक्षुः ।
नीचो जनो गुणशतैरपि सेव्यमानो, हास्येन तद्वदति यत्कलहेऽप्यवाच्यम् ॥ ८ ॥

कृताञ्जलिर्नृपोऽवादीत्, योगिनि ! प्राणजीविनि ! । वीणामुत्तारय स्कन्धात्, रोपश्च क्रियते कथम् ? ॥ ६९ ॥ लज्जां दृक्संगमस्यापि, दधासि किं न चेतसि ? । जानामि स्म वियोगेन, कदा छेदो न दीयते ॥७०॥ हृदयसद्मनि स्थित्वा, हरन्त्याश्च मनो मम । क स्थितं योगिनी त्वं ते, तत्पापान्मोचनं कथम् ? ॥७१॥ अपि बहुकृतोपायैः, कर्णगृहीतहस्तिवत् । त्वया न स्थीयते तर्हि, तस्मिन्किं मे बलं भवेत् ? ॥७२॥ त्वदीयोऽहमिति ज्ञातम्, किन्तु त्वं दूरस्थायिनी । जानेहमद्य योगीशाः, कदा केषां भवन्ति न ॥७३॥ विदेशीयमनुष्येषु, प्रीतिरेव महाक्षतिः । निभवितुं समर्था न, डयन्ते विहगा यथा ॥७४॥ अनुभूतं मयाद्य तत्, भवत्यत्र निदर्शनम् । जानीयां पूर्वमेवाहं, स्निह्यां कदापि नो त्वयि ॥ ७५ ॥ अधुना शोचनीयं किं, स्यादेव भवितव्यता । क्षौरकर्मणि संजाते, ज्ञाते वारतिथी वृथा ॥७६॥ त्वं यया जिह्वयाऽवादी-र्यद् वसाम्यत्र सर्वदा । तयैव प्रोच्यते गन्तुं, कथं ते नीतिरीदृशी ? ॥७७॥ प्रपाल्य स्नेहस्वर्वृक्ष-मुच्छिद्यते कथं त्वया ? । करुणा वारिणा सिञ्चेः, पूरय मे मनोरथम् ॥७८॥ क्षणार्द्धमपि मे वर्षं, जायेत ते वियोगतः । वल्लीविश्लेषतो द्राक्षा, तथाऽहं कृशतां गमी ॥ ७९ ॥ कोमले ते तनूवाचौ, चेतस्तु वज्रनिर्मितम् । यत्राकृतिर्गुणास्तत्र, मिथ्येति वचनं त्वयि ॥ ८० ॥ मनोमुक्तलता मोच्या, मनोहारिणि ! मन्यताम् । संजीविनि ! तवाभावे, कस्य प्रेक्ष्यं मुखं मया ? ॥ ८१ ॥ पूर्वं मया सह प्रीति-रनर्गला कृता त्वया । निक्षिप्य विरहाग्नौ मा-मधुना गम्यते कथम् ? ॥८२॥ अवर्णवादं च दत्वा मां, निरपराधमानुपम् । श्मश्रुस्पन्दनयेन त्वं, मम सामिप्यमुज्झसि ॥८३॥

परिणेतुं तवादेशा-द्गमिष्याम्यन्यथा न हि। वद त्वं करणीयं मे, पालयामि भवद्वचः ॥८४॥ विलापं तस्य च ज्ञात्वा, योगिन्युवाच भारतीम्। मा शुचस्त्वां परीक्षितुं, विलासो हि ममैषकः ॥ ८५ ॥ धन्यौ ते पितरौ त्वं च, यथेच्छं गम्यतां त्वया। दलस्तम्भनकन्यायाः, करग्रहं मुदा कुरु ॥ ८६ ॥ यदीच्छामि त्वया साक-मागच्छामि सतन्त्रिका। त्वयि गते न तिष्ठेयं, यत्र त्वं तत्र मे गतिः ॥ ८७ ॥ शयालुः सुन्दरां शय्यां, प्राप्य हृष्टो भवेद्यथा। श्रान्तो ना वाहनेनैव, क्षुधितोऽन्नसमागमात् ॥ ८८ ॥ तथैव स्वामिनिवाक्यात्, राजाऽभूद्धर्षनिर्भरः। योगिनीहृदयं ज्ञात्वाऽऽह्वयद् दक्षिणमन्त्रिणम् ॥ ८९ ॥ युग्मम् ॥ सोऽप्यागत्य नृपं प्रोचे, विलम्बं कुरुषे कथम्?। दूरः पन्था अतः शीघ्रं, गन्तव्यं यदि ते दया ॥९०॥ प्रतीक्षते स भूपालः, सत्वरं सज्जतां भज। धर्मकर्मगतिः शास्त्रे, त्वरिता कथिता ह्यतः ॥ ९१ ॥ नृपोऽपि वचनात्तस्य, चतुरङ्गबलान्वितः। दुदुम्भिनादसम्पूर्ण-दिग्भागः स्म प्रतिष्ठते ॥ ९२ ॥ योगिनी निजवीणान्तः, श्रेष्ठान्याभूषणान्यधात्। यानि नृपो न जानीया-त्तथैव रक्षति सदा ॥ ९३ ॥ प्रतस्थे दक्षिणामाशां, सचिवाग्रेसरो नृपः। योगिनीं रथमारोप्य, स्वान्तिकं रक्षिता तथा ॥९४॥ उवाह सबलं मार्गे, बलं तस्य महीपतेः। यथा पयोधरो नूत्नो, वा सकल्लोलवारिधिः ॥९५॥ एकैकोपरि गच्छन्तो, हेषन्ते स्म तदा हयाः। मदस्राविगजास्तत्र, शुण्डादण्डविशोभिताः ॥९६॥ रथिनोऽधिज्यधन्वानः, कर्णसमपराक्रमाः। वर्मशिञ्जितगात्राश्चाऽनुजग्मुः प्रौढपत्तयः ॥ ९७ ॥ प्रतिक्षणं स योगिन्याः, स्मरणेनान्तिकं ययौ। जातु तद्द्वयमेकत्र, स्थित्वा गीतामृतं पपौ ॥ ९८ ॥ गच्छन्पञ्चमवारे स, सौन्दर्यजितनन्दनम्। पर्णपुष्पफलापूर्णा-भ्रंलिहशुभवृक्षकम् ॥ ९९ ॥ घनच्छायापराभूतैः, सूर्यांशुभिर्विवर्जितम्। द्रुमगुच्छसीदन्केकि-केकापूर्णककुब्वाणम् ॥ १०० ॥ सवनाब्जसरःशोभा, मनोहार्यन्तरालकम्।

अरण्यमासवानेकं, तस्थौ नापृच्छ्य योगिनीम् ॥ १०१ ॥ तथाध्वखेदखिन्नानि, तस्थुः सेनाङ्गकान्यपि । तत्क्षिप्तसन्निवेशैश्च, घनवद्रङ्गमित्यभूत् ॥ १०२ ॥ निधाय योगिनी चेत्थं, वञ्चनीयोऽत्र भूपतिः । विलम्बो दुःखदो भावी, कृत्वेति सा समुत्थिता ॥ १०३ ॥ वीणामप्यगृहीत्स्कन्धे, चचाल नृपतिं प्रति । गत्वा च तमुवाचेत्थ-मवन्तीनाथ! त्वं शृणु ॥१०४॥ स्नानायाहं दधे नेतः, प्रत्यागंत्री क्षणेन च । मुनेराचारकार्याय, सानुलोममिदं घनम् ॥ १०५ ॥ प्रतिवक्ति स भूपालो, गहनं गहनं खलु । व्याघ्रसिंहाश्च गर्जन्ति, स्त्रीत्वाच्चं भेष्यसि क्वचित् ॥ १०६ ॥ यदीच्छसि त्वया साक-मागच्छामि धनुर्धरः । के सिंहीरक्षणाय स्यु-रित्युक्त्वा सा गता ततः ॥ १०७ ॥ रमणीयाः सरस्तटयो, गभीरा घनवारिभिः । मत्स्यपुच्छकशाघातै-र्नुदन्त्यश्वतरङ्गकान् ॥१०८॥ हंसबकचकोराालि-र्यत्र क्रीडन्ति निर्भयम् । खगाः केचिद्भ्रयन्ते च, कूजन्त्येके मनोहरम् ॥१०९॥ जम्बूजम्बीरचूताश्च, कदम्बदाडिमा अपि । पत्रपुष्पफलग्राम-कारितक्ष्मानमस्क्रियाः ॥ ११० ॥ तादृशस्थानमागत्य, योगिनी फुल्लमानसा । स्कन्धाद्वीणामुत्तार्य, वृक्षस्य कोटरे न्यधात् ॥ १११ ॥ पश्चात्सरोगता स्नातुं, मग्ना घनजलेऽभया । स्नात्वोपकण्ठमागत्य, मार्जयति स्म मूर्धजान् ॥ ११२ ॥ वीणागर्भात्समाकृष्य, रम्यपीताम्बरं दधौ । वनदेवीव साक्षात्सा, जाता सुरमनोहरा ॥ ११३ ॥ मनोभूशरसदृक्षं, नेत्रयोरञ्जनं कृतम् । ललाटकुङ्कुमार्चा तु, बालातप इवाऽभवत् ॥ ११४ ॥ प्रत्यङ्गं भूषणाशोभि, पादौ नूपुरशिञ्जितौ । अप्सरो रूपमाधाया-रोहच्छाखां वटस्य च ॥११५॥ मधुरालापतस्तत्र, गायति स्म यथोचितम् । प्रहरो व्यत्यगादेवं, विचिन्तयति भूपतिः ॥ ११६ ॥ मार्गभ्रान्तिर्व्यथातः सा, नागताद्यावधि किमु । किंवा हिंस्रपशोर्भक्ष्यं, जाता वा ब्रूडिता जले ॥११७॥ वञ्चित्वा वा गता किं मां?, विलम्बश्चाभवत्पुनः । मृगये तामहं गत्वा, यत्र

कुत्राऽपि चेद्भवेत् ॥ ११८ ॥ इति विचार्य भूपालः, प्रस्थितो निःसहायकः । स्फुरद्दक्षिणगात्रेण, कथञ्चिद्धीरतां गतः ॥११९॥ गत्वा पश्यति वल्लीनां, गृहाणि तीक्ष्णदृष्टिभिः । गुप्तस्थानानि चान्यानि, मुहुर्विलोकयत्यसौ ॥१२०॥ मदोन्मत्तो हि मातङ्गो, यथा भ्रमति कानने । यूथभ्रष्टकुरङ्गश्च, तथाऽसौ शोभतेऽधुना ॥ १२१ ॥ पद्धतीमीक्षमाणोऽपि, लेभे न योगिनीं क्वचित् । तया तु प्रेक्ष्य राजानं, वञ्चनायै विचारितम् ॥१२२॥ निजसान्निध्यमाक्रष्टु-मारेभे मिष्टगायनम् । निषण्णा चूतशाखायां, कोकिला गायति यथा ॥ १२३ ॥ पूत्कारयां बभूवोच्चै-र्विदेशिन्नेहि मां प्रति । दोलासुखमवाप्य त्वं, गच्छेः पश्चाद्यथा-सुखम् ॥ १२४ ॥ मत्पथं न व्यतीयाश्च, प्रिय ! सङ्गच्छतां मया । एकाकी च कथं गन्ता, विह्वल इव काननम् ॥१२५॥ विचिन्तयति भूपोऽपि, का समाह्वयतीति माम्। योगिन्या नास्ति नादोऽयम-ज्ञातः खलु ज्ञायते ॥१२६॥ सोऽप्यनुसृत्य तां वाणी-मागतो दृष्टवान्स्त्रियम् । नारी सुराङ्गना वेयमि-ति मुहुरचिन्तयत् ॥ १२७ ॥ मुग्धीभूय नृपस्तस्या-मान्दोलयति तां स्वयम् । तत्कटाक्षशराविद्ध-गात्रग्राम उवाच ताम् ॥१२८॥ कुतः समागता मुग्धे !, निवासो विद्यते क्व च ? । कथमेका-किनी दावे, किंवा नाथेन तर्जिता ? ॥१२९॥ बाल्येऽपि न बिभेति किं ?, सत्यं मां वद मानिनि ! । नृपस्येति वचः श्रुत्वा, साललाप मनोहरम् ॥ १३० ॥ कृताऽज्ञानतया बाल्ये, संधा च दुर्लभा मया । पूरयेद्यदि तां कोऽपि, स मे भर्त्ता भवि-ष्यति ॥ १३१ ॥ यदङ्घ्रिक्षालनं पात्वा, कर्तव्यः स्वामिसङ्गमः । नाथनं वृषभस्येव, कृत्वा वाह्य इतस्ततः ॥ १३२ ॥ तादृशस्वामिनोऽभावा-दन्यस्य च निषेधतः । क्रुद्धखचरपित्राऽहं, निर्वासिता स्वदेशतः ॥ १३३ ॥ दिनचतुष्टयं जात-मिव युगचतुष्टयम् । किन्तु विना प्रतिज्ञायाः, पूर्त्या पाणिग्रहः कथम् ? ॥ १३४ ॥ निरीक्ष्य रमणीं राजा, स्वभानं व्यस्मरत्तदा ।

यथाऽऽभिपलवं प्रेक्ष्य, प्रोल्लसन्ति मीनादयः ॥ १३५ ॥ नृपो विचारयामास, परिणयेयमेतकाम् । दुष्टानां विस्मयार्थं च, सफलत्वाय जन्मनः ॥ १३६ ॥ बभाषे मुग्धभूपालो, हे साक्षान्मन्मथप्रिये ! । परिणयेर्यदि त्वं मां, तत्पूरयामि ते वचः ॥ १३७ ॥ सोवाचापेक्ष इत्येवं, को विलम्बो यदीच्छसि ? । भर्तुः सम्मेलनार्थं तु, सज्जैवाऽस्मि हि पूर्वतः ॥ १३८ ॥ यथान्धो नेत्रयोरर्थी, पङ्गूश्च पादयोर्द्वयोः । तद्वदपत्यावपेक्षा मे, कामश्च खलु दुस्त्यजः ॥ १३९ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

आहारो द्विगुणः स्त्रीणां, निद्रा तासां चतुर्गुणा । षड्गुणो व्यवसायश्च, कामश्चाष्टगुणः स्मृतः ॥९॥

विस्मृत्य योगिनीं भूप, एतस्यां विकलोऽभवत् । पतितो दम्भपाशे स, बहिर्गन्तुं शशाक न ॥ १४० ॥ आतुरः परिणेतुं स, भूपतिर्दाक्षमध्यगः । तयोक्तं जलमानीय, गृहाण चरणोदकम् ॥ १४१ ॥ कपटागारकामिन्याः, कौतुकं दृश्यतां समम् । यत्पारपूर्तिमानेतुं, ब्रह्मादयो न शक्नुयुः ॥ १४२ ॥ प्रधावितो जलार्थं स, प्रविवेश सरोवरम् । नलिनीपत्रसम्पुटे, गृहीतं निर्मलं जलम् ॥ १४३ ॥ आगत्य खचरीं प्रोचे, प्रणामाञ्जलिमादधत् । पादौ समर्पय त्वं यत्, क्षालयामि यथोचितम् ॥ १४४ ॥ नारी पादौ ददाति स्म, क्षालनार्थं समादिशत् । नृपेणाऽपि तथा कृत्वा, सप्ताचमनमापपौ ॥ १४५ ॥ पश्चात्खचरी राजानं, कण्ठे कृत्वा च वस्त्रकम् । वृषभसदृशं चक्रेऽ–भ्रामयच्च सरस्तटे ॥ १४६ ॥ कशामादाय सा यत्र, दधाति स्म स्वपादुके । संस्थाप्य स्वकरद्वन्द्वं, तत्रानुगच्छति स्म सः ॥१४७॥ पश्चात्तरुमधो गत्वा, तया सह नृपोत्तमः ।

वृक्षाणां प्रतिभूत्वेन, प्रारेभे लग्नमुत्सवम् ॥ १४८ ॥ रेणुराशींश्च निर्माय, चतुः कलशच्छद्मना । इत्थं प्रतारितो राजा, परिणीतस्तया सह ॥ १४९ ॥ चेष्टां विलुम्पति विनाशयति स्वधर्मम्, पापं च यो दिशति कामिनीसङ्गजन्यम् । कीर्तिं विलेपयति कज्जलदुर्यशोभिः, धिङ्मोहराजसुभटं तमनङ्गदेवम् ! ॥ १५० ॥ प्रहर्षति स्म सा चित्ते, नाथस्याहो मनीषिता । इत्थं प्रतारितश्चापि, स जानाति मनाग्न हि ॥१५१॥ राज्ञोक्तं तव हास्यस्य, कारणं किमु तद्वद । सोवाच तुल्यभर्तैव, प्रफुल्लयति मे मनः ॥१५२॥ गता कृतार्थतामद्य, सन्धाऽपि पूर्णतामिता । भाग्यं मे प्रौढता प्राप्तम्–शर्मागच्छदनन्तताम् ॥ १५३ ॥ लग्नमहे गते पूर्तिं, करे धृत्वा नृपो जगौ । गच्छावः सन्निवेशे हि, सर्वोऽपि मां प्रतीक्षते ॥ १५४ ॥ जगाद खचरी क्ष्माप–मागच्छन्तीं त्वया सह । ह्रीर्बाधतेऽधिकं मां, तद् गच्छ यामि तवानुगा ॥ १५५ ॥ कामिनीवचनं श्रुत्वा, सन्निवेशमगान्नृपः । आगमं प्रेक्षमाणश्च, यावदत्र स्थितस्तदा ॥ १५६ ॥ खचरीरूपमुत्सृज्य, पुनर्भूत्वा च योगिनी । वीणां हस्ते समादाय, नृपान्तिकमुपागता ॥ १५७ ॥ सिंहासने नृपेणैषा, स्थापिता देवता समा । तोषिताऽन्नपानेन, तुष्टः स गीतपानतः ॥१५८॥ नृपतिश्चिन्तयत्येवं, क्व गताद्यापि खेचरी ? । अथवा वनदेवी मां, विप्रतार्य गता क्वचित् ॥ १५९ ॥ विप्रतारि कथा वा किं, कयाचिद्वञ्चितः किमु । कवलो मुखमागत्य, गतः शोकेन तत्सृतम् ॥ १६० ॥ जानीयाद्यदि योगिनी, निःस्नेहा तद्भविष्यति । पूर्णाभावे वरं न्यून–मित्यादद्यामहं प्रथाम् ॥ १६१ ॥

॥ इति मानवतीचरित्रे मानतुङ्गराजप्रतारणनामा पञ्चमः सर्गः ॥

---

# षष्ठः सर्गः ।



स्वनरी भूपतेश्चित्ते, शल्यमेवाऽभवत्खलु । इन्द्रजालप्रयोगं वै, तद्वार्तां मन्यते हृदि ॥ १ ॥ किन्तु स्ववृत्तप्रवृत्तिं न, कस्मा
अपि वदत्यसौ । योगिन्यपि यथाऽज्ञाना, तथा तस्य स्थितान्तिकम् ॥ २ ॥ सन्निवेशं समुत्पाट्य, ततः सञ्चलितो नृपः । मुंगि-
पत्तनसम्प्राप्तो, योगिन्या जगदे ह्यदः ॥३॥ योगिन्यहं तु भोगी त्व-मावां गच्छेव चेत्सह । टीकां पौराः करिष्यन्ति, त्वमेकाकी
व्रजेरतः ॥ ४ ॥ वसाम्यत्राहमुद्याने, नगरे गम्यतां त्वया । यो रक्षति जनाचारं, त्वमेव योगिनं विदुः ॥ ५ ॥ रत्नवतीं समु-
द्वाह्य, शीघ्रमागच्छ कानने । पुनस्त्वया सहावन्ती-मागच्छामीति निश्चितम् ॥ ६ ॥ त्यक्त्वा योगिनीमुद्याने, नृपोऽगच्छत्पुरीं
प्रति । दलस्तम्भनराजाऽपि, सांमत्यं संचकार च ॥ ७ ॥ मानतुङ्गो मुदा विष्टः, प्रासादोत्तारके निजे । अन्नपानादिना तत्र,
सेवा तस्याऽभवत्तदा ॥ ८ ॥ सुमुहूर्ते तदुद्वाहे, गृहीतं शान्तिकारकम् । दलस्तम्भनकन्यायाः, सम्पूर्णा हि मनोरथाः ॥ ९ ॥
रत्नवतीति जानीते, सफलं भावि जन्म मे । यन्मम परिणेताऽभूत्, महौजा मालवेश्वरः ॥१०॥ योगिन्युपवनावासा, स्ववेष-
मुदतारयत् । दिव्याभूषणवस्त्राणि, प्रत्यङ्गं सा मुदा दधे ॥ ११ ॥ गता रत्नवतीवासं, विस्मापितो जनोऽखिलः । रत्नवत्येति
पृष्टा यत्, किन्नाम कुत आगता ? ॥ १२ ॥ तयोक्तं यदहं देवी, मानतुङ्गस्य भूपतेः । अवन्तीतः समायाता, नाम्ना
मानवती ननु ॥ १३ ॥ जिज्ञासुना नृपेणाऽहं, त्वां द्रष्टुं प्रेषिता किल । आगताऽतस्तवावासं, रूपेण तोषितं मनः ॥१४॥

षावाद-
रिहारे
श्रीमान-
तुङ्ग–
ानवती-
ारित्रम्॥
। २२ ॥

षष्ठः
सर्गः ॥

स्वरूपेणानुरूपां तां, दृष्ट्वा रत्नवती तदा । सहसा मातरं गत्वा, तदीयागमनं जगौ ॥ १५ ॥ किञ्च स्वरूपवृत्तान्त–मुक्त्वा
वदति तां प्रति । द्रष्टुं वाञ्छसि चेदम्ब!, तत्प्रियामाह्वयामि किम् ? ॥१६॥ सोवाचाऽऽह्वयतां शीघ्रं, विलम्बो जायतान्न हि ।
कुमार्यपि जवेनैव, प्रविवेश तया सह ॥ १७ ॥ दृष्ट्वा तां महिषी सापि, प्राहर्षत्सपरिच्छदा । प्रत्यहं भिन्नवेषा सा–ऽऽगच्छन्मा-
नवती ततः ॥ १८ ॥ दलस्तम्भनराजाऽपि, लग्ने तुर्याण्यवादयत् । शुशुभे मण्डपाकारो, महानभून्महोत्सवः ॥ १९ ॥
अंशुकाभूषणैः कन्या, शृङ्गारिता सखीगणैः । वनिता गानसम्पूर्णा, अखिलाशास्तदाऽभवन् ॥ २० ॥ स्त्रीवृन्दे मानवत्यपि,
मधुरं गायति स्म च । न तां स्त्रीम् कोऽपि जानाति, सर्वत्राप्तशुभादराम् ॥२१॥ मानतुङ्गोऽपि सज्जोऽभूत्, शुद्धनेपथ्यमादधत् ।
नानावादित्रनादेन, सहितो मण्डपं गतः ॥ २२ ॥ वरकन्ये स्थिते मन्त्र, उच्चारिते पुरोधसा । जाते चतुःप्रदक्षिणे, समाप्ति-
मगमद्विधिः ॥ २३ ॥ मानतुङ्गस्ततः स्वीयं, सन्निवेशमगान्मुदा । विवाहकार्यमापूर्य, सशान्ति तत्र संस्थितः ॥ २४ ॥
इतश्च रजनीकाले, महिष्योचे स्वपुत्रिका । त्वयाद्य स्वपतेः पार्श्वं, गन्तव्यं रीतिरीदृशी ॥ २५ ॥ मानवती तदोवाच,
कपटयुक्तेन चेतसा । सरले ! श्रृणु मे वाणीं, पश्चात्प्रेषय कन्यकाम् ॥ २६ ॥ अस्माकं कुलदेव्यस्ति, तां यदा नंस्यति नृपः ।
सस्त्रीको रंस्यते तदा, कुलरीतिस्तथाहि नः ॥२७॥ विचरन्त्या सहानेन, ज्ञातं मया हि तत्खलु । असत्यं न वदामि तत्, पृच्छामि
तं यदीच्छसि ॥ २८ ॥ राज्ञी मानवतीं प्रोचे, गत्वा च पृच्छ भूपतिम् । यत्त्वादिशति तत्सर्वं, ज्ञापय मां यथोदितम् ॥२९॥
भूषणालङ्कृतस्वाङ्गा, मानवती तदोत्थिता । लप्सिकास्थालमादाय, प्रस्थिता सा नृपं प्रति ॥ ३० ॥ रमझमेति कुर्वन्ती, सोप-
राजं समागता । पतिर्वेत्ति न केति ताम–हो दम्भविजृम्भणम् ॥ ३१ ॥ प्रणिपत्य स्थिता तत्र, स्थालो मुक्तो हि सन्निधौ ।

॥ २२ ॥

दृष्ट्वा तां मानतुङ्गश्च, मधुरमालपन्मुदा ॥३२॥ वद कामिनि ! काऽसि त्वं ? रात्रावागमनं कथम् ?। कथं च लप्सिकास्थालः, केयम् वार्ता निगद्यताम् ॥ ३३ ॥ तदा मानवती प्रोचे, कृत्वावगुंठनं पुनः । रत्नवतीगुरोः पत्नी, मानवतीति ख्यातिभाक् ॥ ३४ ॥ शृणु स्थालविवेकं यत्, योऽस्मद्भूपालपुत्रिकाम् । परिणयेत्स भक्षयेत्, मदुच्छिष्टां हि लप्सिकाम् ॥ ३५ ॥ अतस्त्वं भक्षयैनां, यद्भवेदाचाररक्षणम् । नो चेद्वरवधूमध्ये, विघ्नं किञ्चित्प्रजायते ॥ ३६ ॥ यदि राज्यसुखस्येच्छा, तर्हि भक्षय प्रीतितः । भामिन्या वञ्चितः स्वामी, खलु स्त्री कपटावृता ॥३७॥ ज्ञातं नृपेण नारीयं, सत्यं वदत्यसंशयम् । अत्रत्या रीतिरीदृशी, प्रतिक्रिया हि तत्र का? ॥३८॥ ततोऽवादीन्नृपो यत्त्वं, प्राग्भुक्त्वा देहि मां पुनः । भक्षयेयमहं येन, नाचारोल्लङ्घनं भवेत् ॥ ३९ ॥ तया भुक्तोज्झिता दत्ता, भूपतिनाऽपि भक्षिता । वराकः किं नृपः कुर्यात्, वञ्चयित्र्यां निजस्त्रियाम् ॥४०॥ जलेनाचमनं कृत्वा, पश्चान्नृप उवाच ताम् । विध्यनन्तरं यदि स्याच्चेत्, कथय पारयामि ते ॥४१॥ किञ्च रत्नवती सात्र, कथय नागता कथम् ? । सा प्रोचे सा तु षण्मासीं, न ते सन्निधिमाप्नुयात् ॥४२॥ गोत्रजाऽर्चाऽवशेषाऽस्ति, षण्मासीं सा भविष्यति । अत्रैव स्थापयिष्यति, त्वद्गमनं निषेत्स्यति ॥४३॥ कथनीयं न कस्मैचित्, वृत्तान्तं गुप्तमेव तत् । आलापाय त्वया साक-मागमिष्यामि सर्वदा ॥ ४४ ॥ प्रतार्येत्थं नृपालं सा, राज्ञी सामीप्यमागता । ज्ञापयति व्रतायासौ, षण्मासीं स्थास्यति नृपः ॥ ४५ ॥ तत उज्जयिनीं गत्वा, गोत्रदेवीं प्रसाद्य च । संगमिष्यति बालाया, इदं गोप्यं हि सर्वतः ॥ ४६ ॥ शीघ्रं कालो गमिष्यति, भविष्यति सुखावहम् । इति विचार्य सा देवी, तस्या विश्वासतः स्थिता ॥ ४७ ॥ द्वितीयमध्यरात्रौ सा, नृपस्यान्तिकमागता । विज्ञाय च नृपेणाऽपि, बहुमानेन सादृता ॥ ४८ ॥ असंशयं कटाक्षैः सा, तदीयं पश्यति मुखम् ।

राजाऽपि तत्स्वरूपेण, मानं मुमोच सर्वथा ॥ ४९॥ यथा यथा गतो मूर्च्छां, विकारं प्राप्तवान्यथा । तथा तथाऽदर्शयत् सा, हावभावादिकं बहु ॥ ५० ॥ जानाति न नृपस्तस्या, वञ्चनायुक्तिमीदृशीम् । वा कामासक्तचित्तानां, नश्यति ज्ञानलोचनम् ॥ ५१ ॥ नृपो मानवतीं वक्ति, दृष्ट्वा त्वां रञ्जितः खलु। त्वमपि कृपया पश्य, सस्नेहं मां प्रति वद ॥ ५२ ॥ तच्छ्रुत्वा मानवत्योक्तं, कथमेवं त्वयोच्यते । मत्तोऽप्यधिकरूपिणी, वर्तते तव सुन्दरी ॥ ५३ ॥ रत्नवत्या तवाशा किं, पूर्यते न हि हे नृप ! । यन्मामर्थयसे चेत्थं, धिग्धिङ्मदनलालसाम् ! ॥ ५४ ॥ यत्र साहाय्यकं योग्यं, तत्र धार्टिं प्रकुर्वता । वञ्चनं नृप ! विसृज्य, स्थेयं परावनौ त्वया ॥५५॥ स्वकीया सुन्दरी या स्यात्, सैवं वाच्याऽपरा न हि । इत्यादि कटु कर्णयन्, नाकरोन्नेत्रवारणम् ॥ ५६ ॥ अतिकामातुरो जातो, याचते तां मुहुर्मुहुः । तदा मानवती भूपं, सहर्षमित्यवोचत ॥ ५७ ॥ अहो त्वमाकुलः कथं ?, भवसि हे नृपोत्तम ! । दास्यहमस्मि ते त्यक्त्वा, गमिष्यामि न कुत्रचित् ॥ ५८ ॥ वनितावचनं श्रुत्वा, राजाहर्षमवाप च । सोत्कण्ठं विषयाभोग-सुखं भुक्तं तया सह ॥५९॥ इत्थमनुदिनं भोगं, भुञ्जानयोस्तयोः क्रमात् । मानवती दधौ गर्भं, पूर्वपुण्यप्रसादतः ॥ ६० ॥ मानवत्येकदा प्रोचे, प्राणाधार ! वचः शृणु । गर्भोऽभवत्त्वया मयि, तदुपायो विचार्यताम् ॥ ६१ ॥ प्रसूतिर्मे भवेद्यदा, तदावन्तीं गमिष्यसि । स्थित्वाऽत्राऽहं कथं पुत्रं, पालयिष्यामि भूपते ! ॥ ६२ ॥ किञ्च लोकापवादश्च, कथं सह्यो भवेन्मया । भावि तु भूतमेवातः, चिह्नं मे किञ्चिदर्पय ॥ ६३ ॥ यथा त्वमंगजं जाने, यदा गच्छेत्तवान्तिकम् । तस्मात्तत्प्रार्थये चिह्न-मन्यन्नास्ति प्रयोजनम् ॥ ६४ ॥ तद्राणीयोग्यतां ज्ञात्वा, चिह्नं तस्यै समर्पितम् । निजनामाङ्किताङ्गुलि, मुक्ताफलाढ्यमालिके ॥ ६५ ॥ सुस्रङ्मुद्रेकरे कृत्वा, मानवत्युत्थिता

तदा । प्रणम्योवाच भूपाल–मेमि रत्नवतीं प्रति ॥६६॥ नृपो न छद्म · जानाति, व्यसृजत्तां च तत्क्षणम् । आगत्य सा बहिर्गृहा– न्मध्यउपवनं गता ॥६७॥ वेषं संगोप्य वीणायां, योगिनी साऽभवत्पुनः । चिन्तयति मनस्येवं, वचनं पालितं मया ॥६८॥ गच्छाम्युज्जयनीं पूर्वं, नास्त्यत्र वासतः फलम् । पितरौ मे प्रतीक्षेते, मच्चिन्ताग्निदहत्तनू ॥६९॥ कार्यसिद्धौ न विलम्बेत, बुध इति विचार्य सा । वीणामादाय शर्वर्यां, प्रस्थितैकाकिनी ततः ॥ ७० ॥ सा क्रमेणागता तस्मिन्, वने यस्य सरस्तटे । पतिर्नृपभतां नीतः, पायितं पादक्षालनम् ॥ ७१ ॥ ततः कतिदिनैरागात्, मालवेष्वकुतो भया । वासरैः कतिभिः पुर्या–मागत्य प्रविवेश सा ॥ ७२ ॥ पितृभ्यां मिलिता गुप्तं, निनाय तौ प्रहर्षताम् । साऽपि हर्षाश्रुपूर्णाक्षी, तथा गद्गदवागभूत् ॥ ७३ ॥ विरहिवल्लभौ देवा–न्मिलेताम् चेत्कचित्पुनः । ज्ञानी तौ च तयोः शातं, जानीयुस्ते त्रयस्तदा ॥ ७४ ॥ पितृभ्यां गदितं पत्यु–र्वचनं च यथातथम् । पुत्रीप्रयुक्तितः सर्वे, सञ्जाता हर्षनिर्भराः ॥ ७५ ॥ सन्त्यज्य योगिनीवेषं, पूर्वं परिदधे हि सा । सहर्षं स विशेषाणि, भोजनानि ततोऽकरोत् ॥ ७६ ॥ रात्रौ सुरङ्गया सा च, गतैकस्तम्भसद्मनि । आकार्य यामिकं रात्रौ, वार्तालापं चकार च ॥ ७७ ॥ जगाद प्राहरिकस्ता–मियद्दिनानि किं त्वया । अहं नोत्थापितः कदा, प्रसुप्तासी-रियत्किमु ॥ ७८ ॥ धृतं मौनव्रतं तावत्, आहूतः पूर्त्यनन्तरम् । यामिकमपि विश्वास्य, स्थिता धर्मपरायणा ॥ ७९ ॥ तप आचाम्लमारेभे, सम्यक्त्वपालनं तथा । पतिप्रतारणे जातं, पापमित्थं निरासयत् ॥ ८० ॥ मनोवाक्कायशुद्ध्याऽसौ, प्रतिक्रान्तीकरोति च.। स्फुरत्येतादृशी बुद्धि–र्भव्येष्वेव न संशयः ॥ ८१ ॥ मानतुङ्गो गुरुस्त्रिय–महर्निशं प्रतीक्षते । असौ किं न समायाति, गर्भधारणतः परम् ॥ ८२ ॥ मानवत्यत्र यामिकं, स्वगर्भवृत्तमाकरोत् । गत्वान्तःपुरमाचक्ष्व, तदित्यादिष्ट-

मेतया ॥ ८३ ॥ चमत्कारमिताः सर्वे, श्रुत्वा तदुदितं वचः । विना नरप्रवेशेन, गर्भस्य धारणं कथम् ? ॥ ८४ ॥ यथा मीनो जलोत्पन्नः, पार्वती पर्वतोद्भवा । गर्भोत्पत्तिस्तथाऽस्यां किं, मन्तव्याऽस्माभिरीदृशी ॥ ८५ ॥ ग्राहरिकः समुत्पत्य, राजप्रासादमागतः । तदीयगर्भवृत्तान्तं, जगाद महिषीं समम् ॥ ८६ ॥ श्रुत्वा राज्ञीगणो वृत्तं, तालीर्दत्वाऽहसन्मिथः । यद्विना नृपतिं गर्भ, एकस्तम्भे कथं भवेत् ? ॥८७॥ द्वेषिण्यः षोडशस्त्रियः, सम्मिल्यैवं व्यचारयन् । पत्रद्वारा पतिः शीघ्रं, ज्ञापनीयो यथातथम् । ॥८८॥ पत्रलेखाय कर्णाख्यां, महिषी संस्थिता ततः । कुशलादि लिखित्वा सा, तत्त्वार्थं न्यस्यति स्म च ॥८९॥ समाचारान्तरं स्वामिन् !, ज्ञातव्यं सुविचारतः । मोहेन रत्नवत्यास्त्वं, वसस्यद्यापि दक्षिणे ॥ ९० ॥ करोषि गृहशुद्धीर्न, कारयसि तथा न च । भ्रमसि परदेशे च, नाकरोस्तच्छुभंकरम् ॥९१॥ निवर्तेथास्ततः शीघ्रं, मा स्था निश्चितभावतः । अत्र मानवती ते स्त्री, ससत्त्वाभूत्स्वयं यतः ॥ ९२ ॥ सा वर्धापनिका ज्ञेया, मृषावाक्यं न वर्तते । अस्माभिरपि तच्छ्रुत्वा, पर्णमिष्टान्नमर्पितम् ॥ ९३ ॥ यस्यातिशयपुण्यं स्यात्, तस्याङ्गनेदृशी भवेत् । यया विनापि भर्तारं, प्रसवितुं हि शक्यते ॥ ९४ ॥ राजन्देवीपदं तस्यै, दास्यते यदि तद्वरम् । तद्धर्षः स्यात्तदापूर्णः, स्वतुल्यस्थानलाभतः ॥ ९५ ॥ तत्र त्वं मग्नतां प्राप्तः, प्रमदाऽत्र शिशुप्रसूः । इत्थं लाभद्वयप्राप्तौ, गृहस्मृतिः कथं भवेत् ? ॥ ९६ ॥ सीमन्तावसरे शीघ्रं, समागच्छेः कृपानिधे ! । इति विलिख्य दूताय, ततः पत्रं समर्पितम् ॥ ९७ ॥ पत्रं नृपाय दातव्यं, प्रणामान्कथयेर्मुखात् । इत्युक्त्वा प्रेषितो दूतोऽचलत् नार्यश्च हर्षिताः ॥ ९८ ॥ मिथः कुर्वन्ति तद्वार्ताः, स्थित्वा सर्वा अहर्निशम् । परिवाच्य पतिः पत्रं, विरक्तोऽस्यां भविष्यति ॥ ९९ ॥ समर्था छिद्रशुद्ध्यां च, हृदि शल्यमिव स्थिता। यस्या भवेत्सपत्नी सा, जीविताऽपि मृतैव हि ॥१००॥

भार्याद्वितयसंयुक्तो, जनोऽपि पीडितोऽनिशम् । महिष्योर्युधि वृक्षोऽपि, यथाऽनुभवति व्यथाम् ॥ १०१ ॥ नार्यः सदार्थयन्ते यत्, सपत्नी न भवेत्प्रभो ! । स्वसरिति वदत्यपि, वैरिणीव सदा वसेत् ॥ १०२ ॥ मानतुङ्गसमीपं स, प्रेष्यः प्राप क्रमेण च । प्रणम्य सत्वरं पत्र-मर्पितं राजहस्तके ॥ १०३ ॥ निर्वाच्य ज्ञातवृत्तान्तो, मानवत्यां चमत्कृतः । किं लिखितं युवत्या तत्, तद्गृहे यन्त्रसप्तकम् ॥ १०४ ॥ पत्रेऽस्मिन्कपटं किञ्चित्, न मान्यं वृत्तमीदृशम् । कयाचिद्‌द्वेषभावेन, लिखितं तु मृषैव तत् ॥ १०५ ॥ पिपीलिका प्रवेष्टुं न, शक्यते यत्र सद्मनि । पवनः सर्वसञ्चारी, प्रवेष्टुं न प्रगल्भते ॥ १०६ ॥ वसन्ति तत्र सा नारी, गर्भिणी जायते कथम् ? । विना पुरुषसंगत्या, न श्रुतं गर्भधारणम् ॥ १०७ ॥ तावद्‌द्वितीयपत्रं च, देवीप्रेषितमागतम् । तदा मेने नृपः सत्यं, तस्या वृत्तान्तमीदृशम् ॥ १०८ ॥ विचारयति तत्सत्यं, नृपतिर्विस्मयं भजन् । असत्यं महिषी मां न, वृत्तान्तं प्रेषयेत्कदा ॥ १०९ ॥ मानवती सती ज्ञाता, स्वप्नेऽपि नान्यथा मता । मुहुः प्रशंसिता क्षिप्रा, दन्तासक्ता तथाऽद्य सा ॥ ११० ॥ तया कथं कृतं चैतत्, धिक् तां दुष्कर्मकारिणीम् । लज्जास्पदं कृतं तया, दर्शये वदनं कथम् ? ॥१११॥ धिक्कारः कुलटेऽस्तु त्वां, कथं त्वं लज्जसे न हि ?। दुर्गोप्यमस्ति दुष्कृत्य-मिति न ज्ञायते किमु ?॥११२॥ चिन्तयति नृपश्चेत्थं, तद्दोषो न मनागपि । दोषभागहमेव स्या-मेकाकिन्येव रक्षिता ॥ ११३ ॥ यौवनोद्भेदसम्प्राप्ते, विरहो दुःसहो भवेत् । तादृशसद्ममध्ये सा, कथमेकाकिनी वसेत् ? ॥११४॥ इतोऽहमपि गच्छेयम्, कथमुज्जयिनीं प्रति ? । न व्यतीता हि षण्मासी, लग्नोत्सवदिनात्परम् ॥ ११५ ॥ गोत्रजपूजनेऽपूर्णे, राड् न विसर्जयिष्यति । इति विचारमग्नो हि, ग्रहिलो वाऽभवन्नृपः ॥११६॥ दूत उत्तरदानेन, राज्ञाऽवन्तीं व्यसृज्यत । क्रमेणागत्य तेन तत्, महिष्यै पत्रमर्पितम् ॥ ११७ ॥ राज्ञो

निर्वाच्य पत्रं ता, वदन्ति च मिथः समाः । सत्वरं पतिरागन्ता, तां च तिरस्करिष्यति ॥ ११८ ॥ मानवतीं प्रतिबद्ध्य, कशाभिस्ताडयिष्यति । हसिष्यामो वयं दृष्ट्वा, तालीर्दत्वा मिथो मिथः ॥ ११९ ॥ षण्मासेऽतिक्रमे क्ष्मापो, वक्ति दक्षिण-भूपतिम् । तन्मां व्यसर्जय शीघ्रं, पूर्णं चेद्गोत्रजार्चनम् ॥ १२० ॥ सोऽवागहं न जाने तत्, प्रत्युतास्ति तवार्चनम् । भवद्भि-र्गोत्रजः पूज्यो, गत्वाऽवन्तीं प्रति नृप ! ॥१२१॥ महिष्या ते म उक्तं यत्, षण्मासीं गोत्रजान्नृपः । पूजयिष्यत्यतः कन्यां, त्वं प्रेषयेस्तदैव हि ॥१२२॥ मानतुङ्ग उवाचेति, वार्तेयं गोत्रजस्य का ? । पूजनं तन्न जानेऽहं, वञ्चितस्ते गुरुस्त्रिया ॥१२३॥ लग्नप्रथमरात्रौ साऽऽ–दयित्वोच्छिष्टखादनम् । उवाच गृहिणीप्राप्तिः, षण्मास्यनन्तरं भवेत् ॥१२४॥ विसर्जयिष्यति त्वां सः, श्वशुरस्ते ततः परम् । तस्या उक्त्या स्थितोऽत्राहम्, देवी नास्ति मया सह ॥ १२५ ॥ दलस्तम्भनराडूचे, गुरुपत्नी न तादृशी। विप्रतार्यावयोरित्थं, काचित्सा वञ्चिका गता ॥१२६॥ द्वयोर्वार्तां परिश्रुत्य, खी–खी–खी–त्यहसत्सभा। धूर्ता काचित्प्रतार्या-ऽगात्, न तत्र संशयास्पदम् ॥१२७॥ मानतुङ्गो गमार्थी च, सज्जोऽभूत्तदनन्तरम् । सोऽपि निजकनीं प्रैषीत्, धनादिभिः प्रपू-रिताम् ॥१२८॥ हयगजरथाधिक्यं, कोटिस्वर्णं तथार्पितम् । पितृभ्यां च प्रणम्यैषा, प्रस्थिता रत्नवत्यपि ॥ १२९॥ रत्नवती-सहायः स, प्रस्थितो मानतुङ्गराट् । शृण्वानः स्वं यशोगानं, बन्दिजनसमीरितम् ॥१३०॥ निवृत्तस्तौ विसृज्यैवं, दलस्तम्भन-भूपतिः । मानतुङ्गश्च सभार्यो, जगामोज्जयिनीं प्रति ॥१३१॥ योगिन्यधिष्ठितोद्यानं, दृष्ट्वा तामस्मरन्नृपः । अपश्यच्च स्वयं गत्वा, कुत्रापि तां ददर्श न ॥१३२॥ ततः स विललाप च, वृक्षादीनि व्यलापयत् । गुणिनि ! स्वामिनि ! कुत्र, गता संत्यज्य मामिह ॥१३३॥ उपकार्यस्ति कोऽपि मे, यत्तां मेलयेत्सुधीः । प्रियस्य विरहं क्षणं, क्षमितुं न हि शक्यते ॥ १३४ ॥ यदि कुत्रापि

गुप्तासी–दर्शनं देहि सत्वरम् । पुनः श्रावय ते वीणां, स्मर्यते सा मुहुर्मुहुः ॥ १३५ ॥ आगमनस्य काले तु, त्वया सहा-
गमम्पुनः । गमनावसरे त्वया, विना किम्प्रचलिष्यति ? ॥१३६॥ तव सेवाऽनिशं कर्ता, नाऽज्ञालोपो मया कृतः । तथापि
मां विहायेत्थं, कथनेन विना गता ॥ १३७ ॥ वाटिकायां स वृक्षेभ्यो, योगिनी क्वेति पृच्छति । तयाधिष्ठितमार्गं मां, दर्श-
यतोपकारिणः ! ॥ १३८ ॥ तदा पवनधूतास्ते, शिरोधूननछद्मतः । न दृष्टेति ददति तं, प्रत्युत्तरं च भूरुहाः ॥ १३९ ॥
केकिभ्यः पृच्छतीत्थं स, तत्केका श्रूयते तदा । राजा जानाति नास्तीह, कथयन्तीति केकिनः ॥ १४० ॥ वाटिकायां
वियोगी राट्, भ्रमतीत्थमितस्ततः । पृच्छन्ति सुभटाः स्वामिन् !, का चिन्ता हृदये तव ? ॥ १४१ ॥ प्रीतिं कृत्वा गता सा
नैव, यथेष्टं नाम गच्छतु । तादृश्यः काश्चिदागत्य, मिलिष्यन्तीति निश्चितम् ॥ १४२ ॥ विलापेन न साऽऽगच्छेत्, गन्तव्यं
सत्वरं ततः । चिन्तात्यागेन हे नाथ !, मनः प्रसन्नतां नय ॥ १४३ ॥ तस्याश्च नास्ति दोषोऽयं, जाता षण्मास्यतोऽत्र नः ।
लग्नकार्यं समाप्यास्याः, शुद्धिस्तु कारिता न हि ॥ १४४ ॥ योगिन आदरोत्कण्ठा, इति किं विस्मृतं नृप ! । विनादरेण किं
तिष्ठेत् ?, मानिनी साऽपि योगिनी ॥ १४५ ॥ इत्थं स्थिरीकृतो राजा, सुभटैः कालवेदिभिः । प्रस्थितोऽध्वनि गन्तव्ये,
तां स्मरन् चेतसि तथा ॥ १४६ ॥ एवं क्रमेण गच्छन् स, तस्मिन्नरण्य आगतः । अप्सरसा सहात्र प्राक् प्राणिग्रहणमस्मरत्
॥ १४७ ॥ चरणोदकपानस्य, भूमिकामपि दृष्टवान् । तथा वृषभरूपेण, भ्रान्तस्तत्स्थानकं स्मृतम् ॥ १४८ ॥ यावदेक-
वियोगो न, शान्तोऽभून्नृपचेतसि । उत्पन्नस्तावदेवान्य, अहो मोहः सुदुःसहः ॥ १४९ ॥ प्रस्थानसमये तत्र, समागाद्दूत
एककः । दलस्तम्भनभूपेन, तुन्नः सहाययाचिना ॥ १५० ॥ मानतुङ्गं प्रति प्रोचे, निवर्तस्व मया सह । पुनश्च शृंगिपत्तनं,

समागच्छ महीपते ! ॥ १५१ ॥ मानतुङ्गोऽप्यवादीत्तं, तस्य किं कारणं वद । त्वद्राज्ञश्चोरितं नास्ति, किञ्चिद्धेमादिकं मया ॥ १५२ ॥ उल्लङ्घितं धरार्धं च, विषमोध्वा च लङ्घितः । तथापि कारणं ब्रूहि, निवर्तय पुनस्तदा ॥१५३॥ कारणं वक्ति दूतो यत्, वर्ततेऽजितशत्रुराट् । चन्देरीनगरीपालो, रत्नवतीमियेष सः ॥१५४॥ प्रार्थिताऽपि कनी तेन, भूपतिना न्यषेधि सः । रत्नवतीच्छति त्वां च, तेन सा परिणायिता ॥ १५५ ॥ किञ्च ततोऽचलस्तदा, युद्धार्थी स समागतः । वक्ति यद्देहि कन्यां वा, युद्धं कुरु मया सह ॥ १५६ ॥ दलस्तम्भनसैन्यं न, बलवत्तादृशं तथा । यथा सज्जीभवेद्युद्धे, शत्रुपराजयेच्छया ॥ १५७ ॥ तस्मादाह्वयति त्वां स, कृपयाऽऽगमनं कुरु । मानतुङ्गोऽपि दूतस्य, वाचा कृपान्वितोऽभवत् ॥१५८॥ संमार्ज्य श्मश्रुणी राज्ञा, कृपाणं तुलितं करे । सज्जीकृत्य सैनिकान्, दक्षिणां प्रस्थितः पुनः ॥ १५९ ॥ व्यसर्जयदवन्तीं तां, रत्नवतीं स बुद्धिमान् । क्रमेण कतिभिर्दिनैः, समागान्मुंगिपत्तनम् ॥ १६० ॥ ह्रेषणैस्तूर्यनादैश्च, ज्ञातवान्दक्षिणानृपः । जामातृश्वशुरौ प्रेम्णा, संश्लिष्टौ दृढभावतः ॥ १६१ ॥ द्वयोर्योगेन भीतोऽसौ, जितशत्रुर्व्यचारयत् । पराजेतुं कथं शक्यौ, जामातृश्वशुरौ बलौ ॥ १६२ ॥ निवर्ते यदि चन्देरीं, परित्यज्य विरोधनम् । अपयशो भवेत्किञ्च, गमिष्याम्युपहास्यताम् ॥ १६३ ॥ भवितव्यं भवेद्देन, क्षत्रियत्वं न मुच्यते । श्रेष्ठात्पराजयेऽपि स्या–ज्जगति यशसां चयः ॥ १६४ ॥ समागतः स सैन्योऽपि, गम्यं केन मुखेन मे । यदि पश्चाद्गमिष्यामि, लज्जन्ते पितरस्तदा ॥ १६५ ॥ सम्पाते वैरिणां जाते, गन्तव्यं न वराकताम् । यथा वासे समुद्रस्य, भेतव्यं मकरान्न हि ॥ १६६ ॥ एकत्र मालवेशेन, सहितो दक्षिणापतिः । चन्देरीपतिरन्यत्र, संस्थितो युद्धकाम्यया ॥ १६७ ॥ दिक्षु चतुर्षु सैन्ये द्वे, दृश्येते युद्धलालसे । तत्र हयाश्च कूर्दन्ते, कुरङ्गाः कानने यथा ॥१६८॥ षट्त्रिंशदायुधैर्वीराः, प्रत्येकं सज्जि-

तास्तदा । सज्जवाहान्समारुह्य, युद्धाय प्रस्थिताः समे ॥१६९॥ सेनाद्वयमभूत्सज्जं, जृम्भन्ते तूर्यनिःस्वनाः । दिशास्तैः पूरिताः सर्वे, मेघगर्जनया यथा ॥१७०॥ द्वयोर्जन्यसमारम्भो-ऽभवत्कातरदुःखदः । अश्वखुरोद्धुता धूलिः, सूर्यमाच्छादयत्तदा ॥ १७१ ॥ महायोधास्तदाश्लिष्टा, घटायां खेलयन्त्यसिम् । शिरस्त्राणाय यै रक्त-वस्त्राणि वेष्टितानि वै ॥१७२॥ सवीरगर्जनाः केचिद्बाणानस्यन्ति सत्वरम् । केचिच्छत्रून्समावेष्ट्य, पराजयंत तत्क्षणम् ॥ १७३ ॥ चकम्पे धरणिः सर्वा, योद्धृपादप्रहारतः । केचित्पादतले रङ्काः, पञ्चत्वं प्राप्नुवन्नपि ॥ १७४ ॥ वव्रुवे मस्तकैर्भूमि-र्नारिकेलचयैर्यथा । शोणितसरिता तत्र, वहति पूर्णतामिता ॥ १७५ ॥ यद्यपि तमसां राशे-र्दर्शनं न भवेन्मिथः । कुन्तादिघट्टनक्षर-दग्निस्तदा सहायकः ॥१७६॥ क्रमेण जितशत्रुराड्, हारितो नश्यति स्म च । अवन्तीशो जये तूर्य-मवादयन्मुदा ततः ॥ १७७ ॥ श्वशुराग्रहमादाय, गतोऽसौ शुंगिपत्तनम् । भोज्यपानादिना तुष्टो, युद्धखेदमपाकरोत् ॥ १७८ ॥ तस्मिन्नवसरे मेघो, गर्जितो केसरी यथा । विद्युत्स्वकीयचापल्यं, प्रादर्शयत्त्रिविष्टपे ॥ १७९ ॥ तरुगिरिधराश्चापि, गर्जन्ति प्रतिघोषतः । लोका जानन्ति यद् व्योम, निपतिष्यत्यधः किमु ॥ १८० ॥ नभः सर्वत्र कृष्णत्वं, नूतनमेघेन चाप्नुवत् । यथा कृष्णाम्बरं धत्तं, शोकसन्दर्शनाय वै ॥१८१॥ स्थाने स्थाने वकानां च, शुभ्रत्वं दृश्यते जनैः । दर्दुरव्याजतो वारि, दुःखयते वियोगिनम् ॥ १८२ ॥ तस्मिन्नवसरे मेघो, वारिधारा ववर्ष च । सर्वत्र जलविस्तारः, पृथिवीशाटिका यथा ॥ १८३ ॥ खगा नीडं परित्यज्य, न गच्छन्ति मनागपि । पथिका अध्वखेदाय, कटिबद्धा भवन्ति न ॥ १८४ ॥ संलिख्य विषमाध्वानं, महिषीं प्रति शुद्धधीः । चतुर्मासं श्वशुरस्य, गृहेऽस्थान्मानतुङ्गराट् ॥ १८५ ॥ इतश्च मानवत्यापि, तत्रैकस्तम्भसद्मनि । प्रसवितः सुतः काले, पूर्णचन्द्रमनोहरः ॥१८६॥

यामिक आज्ञया तस्या, देवीं विज्ञापयत्तदा । उक्तं च नृपतेर्हर्षो, वर्धनीयो विलख्य तत् ॥ १८७ ॥ सम्मिल्य सर्वराज्ञीभिः, भूपतिं प्रेषितं दलम् । कतिभिर्दिवसैर्दूत–स्तस्मै पत्रं प्रदत्तवान् ॥ १८८ ॥ पत्रं निर्वाच्य खिन्नोऽसौ, विचारयति चेतसि । गत्वा शीघ्रं समीक्षेऽहं, मानवतीसुतं खलु ॥ १८९ ॥ प्रस्थितस्तद्विचार्यायम्, धराँश्चित्ते च योगिनीम् । शीघ्रं प्रत्यागतोऽवन्तीम्, मानतुङ्गमहीपतिः ॥ १९० ॥

इति मानवतीचरित्रे मानवतीपुत्रजनननामा षष्ठः सर्गः ।

## सप्तमः सर्गः ।

विवेश नगरीं भूपः, परिच्छेदवृत्तो यदा । तदा संवर्धयामासुः, मुक्ताभिः पौरकन्यकाः ॥ १ ॥ प्रणमन्ति जनाः पादे, स्नेहभावेन भूपतौ । इत्याडम्बरसंयुक्त–स्तदाऽगात्स्वस्य सद्मनि ॥२॥ विसृज्य सुभटान्सर्वान्, सन्मानपूर्वकं तदा । एकाकी भूप आगच्छत्, शुद्धान्तं प्रति सत्वरम् ॥३॥ रत्नवत्यादिमानिन्य, उत्तस्थुर्विनयान्विताः । निषण्ण आसनं प्राप्य, निषेदुः प्रमदा अपि ॥४॥ पृच्छति सर्वनारीभ्यो, वार्ता गर्भस्य सर्विका । मानवती कथं पुत्रं, प्राप्तवतीति चाब्रवीत् ॥५॥ खडखडं हसन्ति ताः, कथयन्ति पतिं प्रति । मानवतीकुवार्ताभिः, किं स्यात्तव प्रयोजनम् ? ॥ ६ ॥ खेलयति सुतं गौरी, विशालाङ्गमनोहरम् । प्रसवितुं शिशुं

भर्ता, विना हि शक्यते तया ॥ ७ ॥ धन्यभाग्योऽसि भर्तस्त्वं, लब्धा यत्तादृशी प्रिया । तत्पुत्रं स्थापये राज्ये, कुलमुज्वालयिष्यति ॥ ८ ॥ पश्य पुत्रमुखं शीघ्रं, गत्वा तस्या निकेतनम् । प्रागत्र कथमागच्छो, विज्ञातः समयो न हि ॥ ९ ॥ तुभ्यं मानवती सती, कोपं करिष्यति प्रभो ! । त्वं गच्छ सत्वरं तत्र, वृथाऽस्मद्धञ्जतां न हि ॥ १० ॥ इत्थं विहसितो राजा, मन्त्रिणमाह्वयन्निजम् । कथं मानवतीपुत्रो, जात इति च पृष्टवान् ॥ ११ ॥ जाने नेति प्रधानः स, उवाच नृपतिम्प्रति । राज्ञीतस्तच्छ्रुतं सर्वं, न कुतं श्रुतिगोचरम् ॥ १२ ॥ गत्वैतत्प्रेक्षणीयं च, तस्य किं कारणं भवेत् । विचार्येति गतौ तत्र, मन्त्रिनृपौ हि सत्वरम् ॥ १३ ॥ अचलानि गृहाङ्गानि, यदा पश्यति भूपतिः । तदा विस्मयमापन्नः, कथंकारं भवेदिति ॥ १४ ॥ यन्त्रमुद्घाट्य विष्टोऽसौ, ससुतां ताञ्च दृष्टवान् । साऽपि तदा पतिं दृष्ट्वा, सलज्जमुत्थिताऽऽसनात् ॥१५॥ पर्यङ्कं निषसादासाव-पश्यद्बालकाननम् । कोपारुणेक्षणैः पत्नीं, भापयति यथोचितम् ॥ १६ ॥ पतिः पृच्छति वामाङ्गि !, त्वं स्थितासीह सर्वदा । प्रसूतिस्ते तथापि मां, विना कस्मादिहाभवत् ॥ १७ ॥ विनाऽन्यपुरुषस्यापि, समागमेन किं स्थितम् ? । श्रुतपूर्वा न वार्तेयं, आश्चर्यमावहेन्न किम् ? ॥ १८ ॥ रङ्गवद्धं निवासस्य, तलमस्ति तथापि किम् । देवस्याराधेनेनाभूत्, पुत्रजन्माथवा तत्र ॥ १९ ॥ जैनीभूत्वा सुकर्माणि, भूरि प्राप्तानि धर्मिणि ! । कुलं लज्जाऽऽस्पदं जातं, धन्यस्त्वां प्राप्तवानहम् ॥ २० ॥ मुखेनोवक्थ केन त्वं, यत्पातयामि पादयोः । बालस्याऽस्य पिता कः स्याद्–लंकुरुष्व तद्गृहम् ॥ २१ ॥ पूर्यते न मयेच्छा ते, त्वं स्वरूपेण देव्यसि । क्रोधसंयुक्तभूपश्च, तथा गर्जन्नुवाच ताम् ॥ २२ ॥ अविचारी नृपोऽवादीत्, त्वयाऽहं तु पराजितः । कुलहीने ! च निर्लज्जे !, केन मुखेन संस्थिता ? ॥ २३ ॥ प्रागेव विस्मृतं मया, गता

त्यक्त्वा च योगिनि । तस्यै दत्ता मयासीश्चेत्, शिष्यात्वेन तदा वरम् ॥ २४ ॥ मानवती तदाऽवोचत्, अविचार्योच्यते त्वया । प्रार्थये यदयोग्यं च, न वाच्यमग्रतो मम ॥ २५ ॥ स्वामिन्नयं शिशुस्ते, स्यादस्थाने तत्र संशयः । अहं ते पादयोर्दासी, सर्वदेच्छामि ते दयाम् ॥ २६ ॥ पश्य नेत्रे समुद्घाट्य, यदावां मिलितौ कदा । विस्मृतं तत्त्वया सर्वं, मया तु स्मर्यते खलु ॥ २७ ॥ जाने त्वं तथ्यमेवैतत्, नो चेद्दास्यामि चिह्नकम् । श्रुत्वैतद्भूपतिः प्रोचे, मिथ्या वदसि हे प्रिये ! ॥ २८ ॥ इति ब्रुवन्नृपस्याग्रे, हारमुद्रे समर्पिते ॥ २९ ॥ दृष्ट्वा विस्मयमापन्नः, पश्यन्नधःस्थितो नृपः । अवादीन्न पुनः किञ्चित्, भेदं च ज्ञातवान्तदा ॥ ३० ॥ प्रोचे मानवती नाथ !, पश्य मां लज्जसे कथम् ? । हारमुद्रे निरीक्षस्व, यदि चिह्नं भवेत्तव ॥ ३१ ॥ सोऽपि विचारयत्येवं, प्राप्तं तदनया कथम् ? । वस्तु ममाऽस्ति दत्तं न, तथाप्यभूत्कथंचन ॥३२॥ मानवतीं तदा प्रोचे, मानिनि ! वद सत्वरम् । हारमुद्रे ममेमे त्वं, प्राप्तवती कथं कुतः ? ॥ ३३ ॥ स्वप्नेऽपि सङ्गतावावाम्, नाभवावेति निश्चितम् । चिह्नं मे तथापि त्वं, कथं प्राप्तवती वद ॥ ३४ ॥ विस्मयजनकं चेदं, त्वया यत्कथितं पुरा । सत्यमुक्त्वा ममाश्चर्यं, निष्कासयाखिलं हृदः ॥ ३५ ॥ तदावगुण्ठनं कृत्वा, बद्धाञ्जलिश्च मानिनी । उवाच भूपतिं सद्यः, तथ्यवार्तां शृणु प्रिय ! ॥ ३६ ॥ मिलिता योगिनी या त्वां, पुरेऽस्मिन्वीणया सह । सदा चरणयोर्यस्या, न्यपतः स्नेहकाङ्क्षया ॥३७॥ कुर्वत्यवमानं ते, कुवाक्यं तु मुहुर्मुहुः । त्वं योगिनीं न विद्धि तां, महीपालाहमेव सा ॥ ३८ ॥ किञ्च दक्षिणमार्गे य–दागादेकसरोवरम् । खचरी परिणीता या, गुप्तमेकाकिना त्वया ॥ ३९ ॥ पीतं तच्चरणोदकं, वृषस्वरूपतोऽभ्रमत् । साऽपि न खेचरी किन्तु, रूपधारिण्यहं स्थिता ॥४०॥ रत्नवत्याः करग्रहे, गुरुपत्नी च याऽभवत् । उच्छिष्टान्नदयित्री च,

षण्मासीं वासयित्र्यपि ॥ ४१ ॥ विषयसुखमारब्धं, तया साकं यथेप्सितं । तव गर्भस्तया दध्रे, चिह्नं तदार्पितं त्वया ॥४२॥ अहमेव गुरुस्त्री सा, मदन्यासीन्न तत्र का । तत्राऽर्पितं तवाङ्कं यत्त-देव वक्ति तत्समम् ॥ ४३ ॥ मदुक्तिः पालिता सर्वा, ज्ञातं न वा त्वया नृप ! । नार्यन्तग्रहणे कश्चि-ल्लाभो भवेत्कदा न हि ॥ ४४ ॥ अङ्गजोऽयं तवैवाऽस्ति, गृहाणाङ्के प्रहर्षतः । कुटिला स्त्रीति सन्देहं, मागास्त्वं बुद्धिमन्नृप ! ॥ ४५ ॥ उपानदुपमाऽहं स्यां, त्वं शिरोवेष्टनं भवेः । किञ्च कण्टकवृक्षोऽहं, त्वं तु सुरतरुप्रभः ॥ ४६ ॥शर्वर्यहं तमो युक्ता, वर्तसे त्वं प्रदीपवत् । मया तेऽविनयो योऽभूत्, तदर्थं प्रार्थये क्षमाम् ॥ ४७ ॥ वचनपालनायाऽहं, कृतवत्यखिलां क्रियाम् । यदिच्छसि मयि प्रिय !, कुरुष्व तदतः परम् ॥४८॥ कथं प्रतारयिष्यति नारी-यं मां नृणां पतिम् । अभिमानं न तद्योग्यं, नष्टं सुरासुरेष्वपि ॥ ४९ ॥ कान्तः कान्तावचः श्रुत्वा, मुखे क्षिप्त्वाऽङ्गुलिं तदा । शिरः कम्पनसंयुक्तः, स्त्रीचरित्रं व्यचारयत् ॥ ५० ॥ अहो नारीचरित्रं यत्, अहं च विप्रतारितः । पुरुषाङ्गबलात्स्त्रीणां, हृद्बलमधिकं भवेत् ॥ ५१ ॥ कदा न तापनीया सा, बलैव नाबला भवेत् । परीक्षेय पुनश्चेत्थं, तर्हि घातं करिष्यति ॥ ५२ ॥ तदीया कीदृशी बुद्धि-र्ययाहं पादनामितः । सुतोऽपि सुतरां प्राप्तो, धर्मोऽत्र वर्तते सखा ॥ ५३ ॥ इति विचार्य भूपाल, आगात्सदोगृहं तदा । हयगजरथाः सर्वे, शृङ्गारसंयुताः कृताः ॥ ५४ ॥ तथाऽऽडम्बरपूर्वेण, तस्या आनयनाय सः । सुभटयुतमन्त्रिणं, प्रैषीन्मानवतीं प्रति ॥ ५५ ॥ महोत्सवं तदाऽकृत, सहर्षः स नृपोत्तमः । अमन्दानन्द-सन्दोहौ, संगतौ हर्षनिर्भरौ ॥ ५६ ॥ मानतुङ्गस्य तस्यां वै, स्नेहः प्रववृधे महान् । निष्कपटप्रलापेन, व्यत्यगात्समयस्तदा ॥ ५७ ॥ तदा मानवती प्रोचे, न भाषस्व मां प्रति । पूर्णदुःखं निपात्याद्य, प्रलपसि कथं भवान् ॥ ५८ ॥ एकस्तम्भनिवा-

सेऽहं, सेहे दुःखान्यनेकशः । अद्यापि हृदये शल्यं, शरक्षत इवास्ति मे ॥ ५९ ॥ मम यशः सपत्नीषु, किञ्चिदपि न रक्षितम् । बहिर्निष्कासिता चाहं, मक्षिका घृततो यथा ॥६०॥ विहस्य नृप ऊचे तां, गम्भीरस्वरतस्तदा । ममैवाद्यापि दोषान्त्वं, निष्कासयसि भूरिशः ॥ ६१ ॥ मोचितं मे त्वया मानं, कोपश्च क्रियते पुनः । नमामि पादयोस्तेऽहं, चेत्त्वयाऽऽदिश्यते यदि ॥ ६२ ॥ तदा मानवती पत्युः, पादयोः पतिता मुदा । देवता दम्पतीव द्राव–शोभेतां विलासतः ॥ ६३ ॥

॥ इति मानवतीचरित्रे मानवतीप्रतिज्ञापूर्तिनामा सप्तमः सर्गः ॥

---

# अष्टमः सर्गः ।

---

रमेते हसतश्चैव, गायतः क्रीडतोऽपि च । वनोपवनमागत्य, गमयामासतुर्दिनान् ॥ १ ॥ दृष्टिगोचरतां त्यक्त्वा, गच्छतो न मनागपि । कृत्वा दिने दिने नूत्न–वेषमानन्दतां तदा ॥ २ ॥ सपत्न्यस्तत्सुखं दृष्ट्वा, दहन्ति स्म च दुराशयाः । किन्तु कस्या बलं नास्ति, येनानन्दत्रुटिर्भवेत् ॥ ३ ॥ राजा मानवतीस्नेहात्, परतन्त्रस्तथाऽभवत् । यथा पङ्कजपुष्पेण, द्विरेफो वशतामियात् ॥ ४ ॥ मदनभ्रम इत्याख्यां, चक्रतुर्बालकस्य तौ । क्रमेण पठनेनाऽसौ, सर्वविद्याविशारदः ॥ ५ ॥ जिनालये

व्ययं कृत्वा, सार्थकीक्रियते धनम् । आराध्यते सम्यक्त्वं, मानवत्या शुभाशयात् ॥ ६ ॥ तयोर्भुञ्जानयोर्भोगं, कतिचिद्व्यत्य-
गुर्दिनाः । पुरोपकण्ठमागच्छ-द्धर्मघोषो महामुनिः ॥ ७ ॥ पौरास्तं वन्दितुं जग्मु-रुद्यानं पुष्पितद्रुमम् । पृष्टा भूपेन
गोः कुत्र, कस्मान्न गम्यतेऽधुना ॥ ८ ॥ ऊचुस्ते वनमागच्छ-द्धर्मघोषो मुनीश्वरः । नागरास्तन्नमस्कर्तुं, गच्छन्ति विमला-
ननाः ॥ ९ ॥ मानवतीसखो राजा, परिवारपरिवृतः । श्रुत्वा लोकमुखाद्वार्ता-मगच्छत्तत्र वंदितुम् ॥ १० ॥ पञ्चाभिगम-
मापाल्य, प्राणमन्मुनिपुङ्गवम् । राजा मानवतीयुतो, निषसादोचितासने ॥११॥ दत्त्वा मुनिर्धर्माशिषं, प्रारेभे देशनां तदा ।
भवाब्धौ मग्नजंतूना-मज्ञानध्वान्तनाशिनीम् ॥ १२ ॥ पापवृत्तीः परित्यज्य, धर्मं चरत देहिनः ! । मन्यध्वं हितशिक्षां यत् ,
मुक्तिस्त्री पाणिगा भवेत् ॥ १३ ॥ मिथ्या पत्न्यादिमाया या, घनच्छायेव चञ्चला । पक्षिणां सङ्गमस्तात्र-यावदुड्डयनं
न हि ॥ १४ ॥ कश्चिद्ब्रवीति तातेति, कश्चिद्दासेति वक्ति हि । अन्यः स्वमिन्निति ब्रूते, विभागा आत्मनस्तथा ॥ १५ ॥ स्नेहो
वा क्रियतां वैरं, सत्यं वा कपटं तथा । भवितव्यं समैरन्ते, धूलिमयैरसंशयम् ॥ १६ ॥ प्राणेभ्योऽपि प्रियो यः स्यात् , स्नेह-
बद्धश्च सर्वदा । सोऽपि महापथं गच्छन् , मनाक् प्रष्टुं न तिष्ठति ॥ १७ ॥ केचिद्गताश्च गच्छन्ति, गमिष्यन्त्यपरेऽपि च ।
तस्मिन्नध्वनि पुण्येन, हीना अनन्तमानवाः ॥ १८ ॥ रङ्कराज्ञोरपि प्रान्ते, समाध्वन्येव सङ्गतिः । उत्तरन्तु भवाब्धिं वै, पुण्य-
पाथेयसंयुताः ॥ १९ ॥ क आमकुम्भविश्वासो, धनस्य च मदो हि कः । सन्ध्यारागो यथा तद्व-दाविर्भूय प्रणश्यति ॥ २० ॥
दानशीलतपोभाव-मेदैश्चतुर्भिरन्वितम् । तं धर्मं भविनः प्राप्य, कर्माणि नाशयन्ति वै ॥२१॥ सुकृतैरेव पार्योऽसौ, भवो नान्यः
सहायकः । अतः पापात्परावृत्तिं, दर्शयन्त्यागमाः समे ॥ २२ ॥

उक्तश्च सूक्तमुक्तावल्यां—

पूज्यपूजा दया दानं, तीर्थयात्रा जपस्तपः ।
श्रुतं परोपकारश्च, मर्त्यजन्मफलाष्टकम् ॥ १ ॥
शिष्टे सङ्गः श्रुतौ रङ्गः, सद्ध्याने धीर्धृतौ मतिः ।
दाने शक्तिर्गुरौ भक्तिः, षडेते सुकृताकराः ॥ २ ॥
देवपूजा गुरूपास्तिः, स्वाध्यायः संयमस्तपः ।
दानं चेति गृहस्थानां, षट्कर्माणि दिने दिने ॥ ३ ॥
जिनपूजनं विवेकः, सत्यं शौचं सुपात्रदानं च ।
महिमक्रीडागारः, शृङ्गारः श्रावकत्वस्य ॥ ४ ॥
यद्भक्तिः सर्वज्ञे, यद्यत्नस्तत्प्रणीतसिद्धान्ते ।
यत्पूजनं यतीनां, फलमेतज्जीवितव्यस्य ॥ ५ ॥

दानं सुपात्रे विशदं च शीलं, तपो विचित्रं शुभभावना च ।
भवार्णवोत्तारणसत्तरण्डं, धर्मं चतुर्धा मुनयो वदन्ति ॥ ६ ॥
जिनेन्द्रपूजा गुरुपर्युपास्तिः, सत्त्वानुकम्पा शुभपात्रदानम् ।
गुणानुरागः श्रुतिरागमस्य, नृजन्मवृक्षस्य फलान्यमूनि ॥ ७ ॥
त्याज्या हिंसा नरकपदवी नानृतं भाषणीयं,
स्तेयं हेयं सुरतविरतिः सर्वसङ्गान्निवृत्तिः ।
जैनो धर्मो यदि न रुचितः पापपङ्कावृतेभ्यः,
सर्पिर्दुष्टं किमिदमियता यत्प्रमेही न भुङ्क्ते ॥ ८ ॥
त्रिसन्ध्यं देवार्चां विरचय चयं प्रापय यशः,
श्रियः पात्रे वापं जनय नयमार्गं नय मनः ।
स्मर क्रोधाद्यारीन् दलय कलय प्राणिषु दयां,

जिनोक्तं सिद्धान्तं श्रृणु वृणु जवान्मुक्तिकमलाम् ॥ ९ ॥

कर्तव्यं जिनवन्दनं विधिपरैर्हर्षोल्लसन्मानसैः,
सच्चारित्रविभूषिताः प्रतिदिनं सेव्याः सदा साधवः ।
श्रोतव्यं च दिने दिने जिनवचो मिथ्यात्वनिर्णाशनम्,
दानादौ व्रतपालने च सततं कार्यारतिः श्रावकैः ॥ १० ॥

वन्द्यास्तीर्थकृतः सुरेन्द्रमहिताः पूजां विधायामलां,
सेव्याः सन्मुनयश्च पूज्यचरणाः श्राव्यं च जैनं वचः ।
सच्छीलं परिपालनीयमतुलं कार्यं तपो निर्मलम्,
ध्येया पञ्च नमस्कृतिश्च सततं भाव्या च सद्भावना ॥ ११ ॥

देवं श्रेणिकवत्प्रपूजय गुरुं वन्दस्व गोविन्दवत्,
दानं शीलतपःप्रसङ्गसुभगां चाभ्यस्य सद्भावनाम् ।

श्रेयांसश्च सुदर्शनश्च भगवानाद्यः स चक्री यथा,
धर्म्ये कर्मणि कामदेव वदहो चेतश्चिरं स्थापय ॥ १२ ॥

जन्तूनामवनं जिनेशमहनं भक्त्यागमाकर्णनं,
साधूनां नमनं मदापनयनं सम्यग्गुरोर्माननम् ।
मायाया हननं क्रुधश्च शमनं लोभद्रुमोन्मूलनं,
चेतः शोधनमिन्द्रियाश्वदमनं यत्तच्छिवोपायनम् ॥ १३ ॥

त्रैकाल्यं जिनपूजनं प्रतिदिनं सङ्घस्य सन्माननं,
स्वाध्यायो गुरुसेवनं च विधिना दानं तथाऽऽवश्यकम् ।
शक्त्या च व्रतपालनं वरतपो ज्ञानस्य पाठस्तथा,
सैष श्रावकपुङ्गवस्य कथितो धर्मो जिनेन्द्रागमे ॥ १४ ॥

कृत्वाऽर्हत्पदपूजनं यतिजनं नत्वा विदित्वाऽऽगमं,

हित्वा संगमधर्मकर्मठधियां पात्रेषु दत्त्वा धनम् ।
गत्वा पद्धतिमुत्तमक्रमजुषां जित्वाऽन्तरारिव्रजम्,
स्मृत्वा पञ्च नमस्क्रियां कुरु करक्रोडस्थमिष्टं सुखम् ॥ १५ ॥
भक्तिः श्रीवीतरागे भगवति करुणा प्राणिवर्गे समग्रे,
दीनादिभ्यः प्रदानं श्रवणमनुदिनं श्रद्धया सुश्रुतीनाम् ।
पापापोहे समीहा भवभयमसमं मुक्तिमार्गानुरागः,
सङ्गो निसङ्गचित्तैर्विषयविमुखता हर्म्यिणामेष धर्मः ॥ १६ ॥
कर्तव्या देवपूजा शुभगुरुवचनं नित्यमाकर्णनीयं,
दानं देयं सुपात्रे प्रतिदिनममलं पालनीयं च शीलम् ।
तप्यं शुद्धं स्वशक्त्या तप इह महती भावना भावनीया,
श्राद्धानामेष धर्मो जिनपतिगदितः पूतनिर्वाणमार्गः ॥ १७ ॥

इत्युपदेशमाकर्ण्य, प्रतिबुद्धो नृपस्तदा । बद्धाञ्जलिर्महाक्रापि–मित्यूचे स उदारधीः ॥ २३ ॥ स्वामिन्मानवतीयं मां, पादावपातयत्कथम्? । वचनं पालितं सम्यग्, मदुपाया विनाशिताः ॥२४॥ तस्य किं कारणं जातं, ज्ञापय कृपया हि माम् । राज्ञीत्युक्ते द्वयोः, पूर्वभवं गुरुरवोचत ॥ २५ ॥ जम्बूद्वीपे सुविस्तारे, क्षेत्रं भारतसंज्ञकम् । पृथिव्या भूषणं तत्र, पृथिवी-भूषणं पुरम् ॥ २६ ॥ राजा तिलकसेनोऽत्र, सेनाऽस्य तिलकं भुवि । धनदत्ताख्य इभ्योऽत्र, तस्य त्वमङ्गजः खलु ॥ २७ ॥ आख्यया जिनदत्तस्त्वं, जिनपालस्तवाऽनुजः । व्यापारेण स्वकीयं वै, वर्तनमभवत्पुरा ॥ २८ ॥ क्रमेण जिनपालस्या–भवत्सद्गुरुसङ्गतिः । प्रत्याख्यानं मृषावादे, गृहीतं तेन तन्मुखात् ॥२९॥ व्यापारे कपटं नैव, नैव हास्येऽपि सर्वदा । मनस्येवं स जानाति, धूलिर्लभ्येत छद्मना ॥ ३० ॥ वाणिज्येऽपि वदेत्सत्यं, लाभः कदा न जायते । अकरोद्धृतधर्मं स, मग्नश्च तिष्ठति सदा ॥ ३१ ॥ एकदा जिनदत्तोऽय–मीक्षणायापणं गतः । तेन लाभस्तु न दृष्ट, उत मूल्येऽपि न्यूनता ॥३२॥ आहूय जिनपालं स, जिनदत्तश्च पृच्छति । दूरे तिष्ठतु लाभस्तु, एतावन्न्यूनता कथम्? ॥ ३३ ॥ एतादृशं त्वमुद्योगं, मूर्खाऽशिक्षत कुत्र रे ! । एवं व्यापारतो भ्रातः!, प्रचलेद्वर्तनं कथम्? ॥३४॥ किंवाऽभूः पारदारिकः?, तेन नैःस्वं प्रजायते । वद सत्यं त्वया कुत्र, प्रभूतं व्ययितं धनम् ॥ ३५ ॥ जिनपालस्तदावादीत्, कुपात्रे न धनव्ययः । धन–तृष्णा तव स्याच्चेत्, वाणिज्यं करणं कुरु ॥ ३६ ॥ धनं धरातले तिष्ठेत्, प्रान्ते न जायते सखा । सुकृतदुष्कृतान्येव, तदाऽनुयान्ति भृत्यवत् ॥ ३७॥

उक्तञ्च सूक्तमुक्तावल्याम्—

द्रव्याणि तिष्ठन्ति गृहेषु नार्यो, विश्राममूभौ स्वजनाः स्मशाने ।

देहश्रितायां परलोकमार्गे, कर्मानुगो याति स एक जीवः ॥ १८ ॥

भ्राता मे गुणवानिति, विज्ञातं पूर्वतो मया । किन्त्वधुना करालत्वं, त्वया प्रदर्श्यते खलु ॥ ३८ ॥ जिनदत्तो निशम्य तत्, भृशं चुक्रोध बन्धवे । पञ्चप्रस्थप्रमाणेन, निर्दयस्तमताडयत् ॥ ३९ ॥ मर्मभेदेन मृत्वा स, कृत्वा लघुभवं तथा । च्युत्वाऽन्यभवे जातो, मानवतीस्वरूपतः ॥ ४० ॥ जिनदत्तोऽपि सोदर-विरहव्यथितो भृशम् । कतिकालान्तरं मृत्वा, जज्ञे स चात्र भूपतिः ॥ ४१ ॥ स एव मानतुङ्गस्त्वं, संशयो नास्ति लेशतः । उत्पन्नोऽसि नृपत्वेन, तदूर्ध्वं ज्ञायते त्वया ॥४२॥ प्राक्तनवैरभावेन, दुःखं तस्यै त्वयार्पितम् । तयाऽपि सत्यवादिन्या, पालितं वचनं पुनः ॥ ४३ ॥ मृषावादव्रतस्यैतत्, फलं ज्ञात्वा नृपोऽवदत् । एतावत्समयः स्वामिन्!, पृथैव गालितो मया ॥ ४४ ॥ मुनिपुङ्गव ऊचे यद-स्ति पञ्च महाव्रतम् । तथा द्वादश गौणानि, तेष्विदं सारवत्खलु ॥ ४५ ॥

उक्तञ्च सूक्तमुक्तावल्यां—

कुर्वन्ति देवा अपि पक्षपातं, नरेश्वराः शासनमुद्वहन्ति ।
शान्ता भवन्ति ज्वलनादयो, यत्तत्सत्यवाचां फलमामनन्ति । ॥ १९ ॥
तस्याग्निर्जलमर्णवः स्थलमरिर्मित्रं सुराः किंकराः,
कान्तारं नगरं गिरिर्गृहमहिर्माल्यं मृगारिर्मृगः ।

पातालं विलमस्त्रमुत्पलदलं व्यालः शृगालो विषं,
पीयूषं विषमं समं च वचनं सत्यांचितं वक्ति यः ॥ २० ॥
विश्वासायतनं विपत्तिदलनं देवैः कृताराधनं,
मुक्तेः पथ्यदनं जलाग्निशमनं व्याघ्रोरगस्तम्भनम् ।
श्रेयः संवननं समृद्धिजननं सौजन्यं संजीवनम्,
कीर्तेः केलिवनं प्रभावभवनं सत्यं वचः पावनम् ॥ २१ ॥
राज्यं यान्तु श्रियो यान्तु, यान्तु प्राणा विनश्वराः ।
या मया स्वयमेवोक्ता, वाचा मा यातु शाश्वती ॥ २२ ॥
एवं करोमीति कृतप्रतिज्ञो यः, स्वीकृतं नैव करोत्यसत्त्वः ।
यात्यस्य संस्पर्शजकश्मलानां, प्रक्षालनायेव रविः पयोधिम् ॥ ॥ २३ ॥
पल एवि महापुरिसा, पडिवन्नं अन्नहा न हु कुणन्ति ।

गच्छन्ति न दिण्णत्तं, कुणंति न हु पत्थणाभंगं ॥ २४ ॥
तत्तिअ मित्तं जंपह, जत्तिअ मित्तस्स निक्कयं हवइ ।
तं उक्खिवेह भारं, जं अद्धपहे न छंडेइ ॥ २५ ॥

अस्य संपालना केचित्, सत्वरं मोक्षमाप्नुवत् । श्रुत्वैतन्मानतुङ्गोऽपि, प्रव्रज्यायै स्वमनो दधे ॥ ४६ ॥ राज्यं समर्प्य पुत्राय, मानवतीसखो नृपः । संसारासारतां ज्ञात्वा, प्राणमन्मुनिपादयोः ॥ ४७ ॥ दीक्षामादाय भूपालो–ऽभ्यस्यति विनयादिकम् । निरतिचारपूर्वकं, महाव्रतानि पालयन् ॥ ४८ ॥ मानतुङ्गमुनिश्रेष्ठ, उग्रश्च व्यहरत्तदा । क्रमेण द्वादशाङ्गस्य, सम्यग्ज्ञाता हि सोऽभवत् ॥ ४९ ॥ संयमं मानवत्यपि, वहति ज्ञानिनी सदा । महाव्रतेषु दोषश्च, कदाचिन्न प्रजायते ॥५०॥ शत्रुं मित्रेण जानाति, तुल्यं सदाऽन्यथा न हि । प्रफुल्लवदना नित्यं, संतुष्टा वर्तते तथा ॥ ५१ ॥ क्षान्तिशमदमादयः, संयमरागरंजिताः । जपतपःप्रयोगेण, गुरुमन्वसरत्सदा ॥ ५२ ॥ राजर्द्धिं गृहवासश्च, स्वप्नेऽपि न व्यचारयत् । यथाहिः कञ्चुकीं त्यक्त्वा, कदा पुनर्न पश्यति ॥ ५३ ॥ मानतुङ्गऋषिश्चापि, साध्वी मानवती तथा । रुरुधतुश्च मोहादि, भव्यांश्च प्रत्यबुध्यताम् ॥ ५४ ॥ माससंलेखनां कृत्वा, सर्वार्थसिद्धमाप्नुताम् । आयुर्लब्धं त्रयस्त्रिंशत्–सागरोपममानकम् ॥ ५५ ॥ ततश्च्युत्वा जनिष्यतो, महाविदेहनीवृति । मनुष्यजन्म संप्राप्य, सुकृतानि करिष्यतः ॥ ५६ ॥ गृहिष्यतश्च तौ दीक्षां, केवलं प्राप्स्यतः शुभम् । अब्जं निर्मास्यति चेन्द्रो, लप्स्येते मोक्षमीप्सितम् ॥ ५७ ॥ मृषावादव्रतालम्बात्, पतिर्नम्रीकृतोऽनया ।

मिथ्यानेकवचो जातं, प्राप्तं शिवपदं तथा ॥ ५८ ॥ ऐहिकं पारलौकिकं, सुखं सम्यग् ददाति नः । व्रतं द्वितीयमेवेद-मतः श्रेष्ठतमं विदुः ॥ ५९ ॥ तस्य फलं हि तादृशं, स्वादयितुं यदीच्छथ । परिहर्तुं मृषावादं, कटिबद्धा भवन्तु भोः ! ॥ ६० ॥

त्रिनैन्दग्रहभूसंख्ये, वैक्रमीये सुवत्सरे । रचयामास पंन्यासो, गणीन्द्रस्तिलकाभिधः ॥

॥ इति मानवतीचरित्रे दम्पत्योश्चारित्रग्रहणसर्वार्थसिद्धगमननामा
अष्टमः सर्गः समाप्तः ॥

# श्रीमानतुङ्ग-मानवतीचरित्रं समाप्तम् ।